# NOTE.

The text is in the main that of Schlegel, a reprint of which has long been a School-book in this Presidency. All deviations from Schlegel's text are cited in the Notes. The Sanskrit notes are from the commentary to the Bombay Edition. The references are to Kielhorn's Grammar.

Bombay,
August 7th 1882.

# कविस्तुतिः ।



कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १ ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥ २ ॥
वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥ ३ ॥
यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ४ ॥
नमस्तस्मै मुनीशाय श्रीयुताय तपस्विने ।
सर्वज्ञानाधिवासाय वाल्मीकये नमो नमः ॥ ५ ॥

# रामायणम् ।

॥ ॐ ॥

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवः ॥ १ ॥
कोन्वस्मिन्सांप्रतं लोके गुणवान्कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥
चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान्कः को वदान्यश्च कश्चैकः प्रियदर्शनः ॥ ३ ॥
आत्मवान्को जितक्रोधो धृतिमान्कोनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥
क उदारः समर्थश्च त्रैलोक्यस्यापि रक्षणे ।
कः प्रजानुग्रहरतः को निधिर्गुणसंपदाम् ॥ ५ ॥
समग्रा रूपिणी लक्ष्मीः कमेकं संश्रिता नरम् ।
अनिलानलसूर्येन्दुशक्रोपेन्द्रसमश्च कः ॥ ६ ॥
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
देवर्षे त्वं समर्थोसि ज्ञातुमेवंविधं नरम् ॥ ७ ॥
श्रुत्वा चैतत्त्रिकालज्ञो वाल्मीकेर्नारदो वचः ॥
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ८ ॥
बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ९ ॥
इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ॥ १० ॥
बुद्धिमान्नीतिमान्वाग्मी श्रीमाञ्छत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ११ ॥

महोरस्को महेष्वासो गूढजत्रुररिंदमः ।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ १२ ॥
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥ १३ ॥
धर्मज्ञः सत्यसंधश्च जितक्रोधो जितेन्द्रियः ।
मनस्वी ज्ञानसंपन्नः शुचिर्वीर्यसमन्वितः ॥ १४ ॥
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ।
वेदवेदाङ्गविच्चैव धनुर्वेदे च निष्ठितः ॥ १५ ॥
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ १६ ॥
सर्वदानुगतः सद्भिः समुद्र इव सिन्धुभिः ।
रामः सर्वगुणोपेतः कौशल्यानन्दवर्धनः ॥ १७ ॥
समुद्र इव गाम्भीर्ये स्थैर्ये च हिमवानिव ।
विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ॥ १८ ॥
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ।
धनदेन समस्त्यागे सत्ये धर्म इवापरः ॥ १९ ॥
तमेवं गुणसंपन्नं रामं सत्यपराक्रमम् ।
ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।
यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः ॥ २० ॥
तस्याभिषेकसंभारान्दृष्ट्वा भार्याथ कैकयी ।
पूर्वं दत्तवरा राज्ञा वरावेतावयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २१ ॥
स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥ २२ ॥
स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात् ॥ २३ ॥
तं व्रजन्तं प्रियो भ्राता लक्ष्मणोनुजगाम ह ।
स्नेहाद्विनयसंपन्नः सौभ्रात्रमनुदर्शयन् ॥ २४ ॥

रामस्य दयिता भार्या नित्यं प्राणसमा हिता ।
जनकस्य कुले जाता देवमायेव निर्मिता ॥ २५ ॥
सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः ।
सीताप्यनुगता रामं शशिनं रोहिणी यथा ॥ २६ ॥
पौरैरनुगतो दूरं पित्रा दशरथेन च ।
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ॥ २७ ॥
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ।
स ततार ततो गङ्गां वनं चैव विवेश ह ॥ २८ ॥
ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ।
चित्रकूटमनुप्राप्ता भरद्वाजस्य शासनात् ॥ २९ ॥
रम्यमावसथं तत्र कृत्वा रामः सलक्ष्मणः ।
उवास सीतया सार्धं वल्कलाजिनसंवृतः ॥ ३० ॥
श्रीमद्भिस्तैस्त्रिभिः सार्धं चित्रकूटो रराज सः ।
अधिष्ठितो यथा मेरुः श्रीवैश्रवणशंकरैः ॥ ३१ ॥
चित्रकूटं गते रामे पुत्रशोकातुरस्तदा ।
राजा दशरथः स्वर्गं जगाम विलपन्सुतम् ॥ ३२ ॥
मृते तु तस्मिन्भरतो वसिष्ठप्रमुखैर्द्विजैः ।
प्रचोदितोपि राज्याय नैच्छद्राज्यं महाबलः ॥ ३३ ॥
स जगाम वनं वीरो रामपादप्रसादकः ।
अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥ ३४ ॥
त्वमेव राजा धर्मज्ञ इति रामं वचोब्रवीत् ।
न चैच्छत्पितुरादेशाद्राज्यं रामो महाबलः ॥ ३५ ॥
पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ।
निवर्तयामास ततो भरतं भरताग्रजः ॥ ३६ ॥
स काममनवाप्यैव गृहीत्वा रामपादुके ।
नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ॥ ३७ ॥
आशङ्कमानश्च पुनः पौरजानपदागमम् ।
रामोपि हित्वा तं शैलं प्रययौ दण्डकं वनम् ॥ ३८ ॥

विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ।
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ॥ ३९ ॥
अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ।
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ॥ ४० ॥
वसतस्तस्य रामस्य वने वनचरैः सह ।
ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् ॥ ४१ ॥
रामं कमलपत्राक्षं शरण्यं शरणैषिणः ।
महेन्द्रमिव दुर्धर्षं बाणखड्गधनुर्धरम् ॥ ४२ ॥
तेन तत्र सह भ्रात्रा जनस्थाननिवासिनी ।
विरूपिता शूर्पणखा राक्षसी कामयोहिता ॥ ४३ ॥
ततः शूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् ।
खरं च दूषणं चैव रक्षस्त्रिशिर एव च ॥ ४४ ॥
निजघान रणे राम एकस्तान्सर्वराक्षसान् ।
तेषामनुबलं चैव सहस्राणि चतुर्दश ॥ ४५ ॥
ततो ज्ञातिवधं श्रुत्वा रक्षस्त्रैलोक्यविश्रुतम् ।
नामतो रावणो नाम कामरूपी महाबलः ॥ ४६ ॥
राक्षसाधिपतिः शूरो रावणः क्रोधमूर्च्छितः ।
सहायं वरयामास मारीचं नाम राक्षसम् ॥ ४७ ॥
वार्यमाणोऽपि बहुशो मारीचेन स रावणः ।
न विरोधो बलवता क्षमो रावण तेन ते ॥ ४८ ॥
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ।
जगाम सहमारीचो रामाश्रमपदं तदा ॥ ४९ ॥
तेन मायाविना दूरमपवाह्य नृपात्मजौ ।
जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ ५० ॥
गृध्रं च निहतं दृष्ट्वा हृतां भार्यां च मैथिलीम् ।
राघवः शोकसंतप्तो विललापाकुलेन्द्रियः ॥ ५१ ॥
ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ।
मार्गमाणो वने सीतां राक्षसं संददर्श ह ।

कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५२ ॥
हत्वा तमदहत्काष्ठैः सोऽभूद्दिव्यवपुस्तदा ।
स चास्य कथयामास शबरीं श्रमणां तदा ।
शबरीं धर्मनिपुणामभिगच्छेति राघव ॥ ५३ ॥
तस्यैव वचनाद्रामो लक्ष्मणेन सहानघः ।
अभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥ ५४ ॥
शबर्याः पूजितः सम्यग्रामो दशरथात्मजः ।
पम्पातीरे हनुमता संगतो वानरेण ह ॥ ५५ ॥
हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।
सुग्रीवाय च तत्सर्वं रामोऽशंसन्महाबलः ॥ ५६ ॥
सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य चेष्टितम् ।
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ॥ ५७ ॥
ततो वानरराजेन वैरानुकथनं महत् ।
रामायावेदितं सर्वं प्रणयाद्दुःखितेन ह ॥ ५८ ॥
प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ।
वालिनश्च बलं तत्र कथयामास वानरः ॥ ५९ ॥
राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ।
दर्शयामास सुग्रीवो महापर्वतसंनिभम् ॥ ६० ॥
उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।
पादाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ॥ ६१ ॥
बिभेद च पुनः सालान्सप्तैकेन महेषुणा ।
गिरिं रसातलं चैव जनयन्प्रत्ययं तदा ॥ ६२ ॥
ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ।
किष्किन्धां रामसहितो जगाम स्वां गुहां तदा ॥ ६३ ॥
ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६४ ॥
अनुमान्य तदा तारां सुग्रीवेण समागतः ।
निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६५ ॥

ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ।
सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ६६ ॥
स च सर्वान्समानीय वानरान्वानरर्षभः ।
दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ६७ ॥
ततो गृध्रस्य वचनात्संपातेर्हनुमान्बली ।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ६८ ॥
तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।
ददर्श सीतां ध्यायन्तीमशोकवनिकागताम् ॥ ६९ ॥
निवेदयित्वाभिज्ञानं प्रवृत्तिं विनिवेद्य च ।
गृहीत्वा प्रत्यभिज्ञानं मर्दयामास तोरणम् ॥ ७० ॥
पञ्च सेनाग्रगान्हत्वा सप्त मन्त्रिसुतानपि ।
कुमारमक्षं निष्पिष्य ग्रहणं समुपागमत् ॥ ७१ ॥
अस्त्रेणोन्मुच्य चात्मानं ज्ञात्वा पैतामहान्वरान् ।
मर्षयन्राक्षसान्वीरो यन्त्रिणस्तान्यदृच्छया ॥ ७२ ॥
ततो दग्ध्वा पुरीं लङ्कां पुनर्दृष्ट्वा च मैथिलीम् ।
रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥ ७३ ॥
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
न्यवेदयत्स सुप्रीतो दृष्टा सीता मयेति वै ॥ ७४ ॥
ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ।
समुद्रं क्षोभयामास शरैरादित्यसंनिभैः ॥ ७५ ॥
दर्शयामास चात्मानं समुद्रः सरितां पतिः ।
समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ७६ ॥
तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे ।
अभ्यषिञ्चत्स लङ्कायां राक्षसेन्द्रं विभीषणम् ॥ ७७
रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ।
तामुवाच ततो वीरः परुषं जनसंसदि ॥ ७८ ॥
अमृष्यमाणा सा सीता विवेश ज्वलनं सती ।
ततो वायुः प्रादुरासीद्वागुवाचाशरीरिणी ॥ ७९ ॥

ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् ।
अग्रहीदमलां रामो वचनाच्च गुरोस्तदा ॥ ८० ॥
कर्मणा तेन महता देवा इन्द्रपुरोगमाः ।
सदेवर्षिगणास्तुष्टा राघवं तेऽभ्यपूजयन् ॥ ८१ ॥
तथा परमसंतुष्टैः पूजितः सर्वदैवतैः ।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ ८२ ॥
देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ।
पुष्पकं च समारुह्य नन्दिग्रामं ययौ तदा ॥ ८३ ॥
नन्दिग्रामे जटां छित्वा भ्रातृभिः सह राघवः ।
अयोध्यां नगरीं प्राप्य राज्यं पुनरवाप्तवान् ॥ ८४ ॥
हृष्टः प्रमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ८५ ॥
न पुत्रमरणं केचित्पश्यन्ति स्म नराः क्वचित् ।
नार्यश्चाविधवा नित्यं पतिशुश्रूषणे रताः ॥ ८६ ॥
न चाग्निजं भयं किंचिन्नाप्सु मज्जन्ति जन्तवः ।
न वातजं भयं किंचिन्न तस्करभयं तथा ॥ ८७ ॥
नगराणि च राष्ट्राणि धनधान्ययुतानि च ।
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥ ८८ ॥
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ।
असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥ ८९ ॥
राजवंशाञ्छतगुणान्स्थापयिष्यति राघवः ।
चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ॥ ९० ॥
दश वर्षसहस्राणि दश वर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥ ९१ ॥'

---

इदं पवित्रमाख्यानं पुण्यं वेदैश्च संमितम् ।
यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ९२ ॥

एतदाख्यानमायुष्यं पठन्रामायणं नरः ।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ ९३ ॥
पठन्द्विजो वागृषभत्वमीयात्क्षत्रान्वयो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यपतित्वमीयाच्छृण्वन्हि शूद्रोऽपि महत्त्वमीयात् ॥९४॥

इत्यार्षे रामायणे वाल्मीकीये चतुर्विंशतिसाहस्र्यां संहितायां बालकाण्डे नारदवाक्ये काव्यसंक्षेपो नाम प्रथमः सर्गः ॥ १ ॥

---

नारदस्याथ तद्वाक्यं श्रुत्वा वाक्यविशारदः ।
वाल्मीकिः शिष्यसहितो विस्मयं परमं ययौ ॥ १ ॥
मनसैव च रामाय पूजां चक्रे महामुनिः ।
तं चापि शिष्यसहितो नारदं प्रत्यपूजयत् ॥ २ ॥
यथावत्पूजितस्तेन देवर्षिर्नारदस्ततः ।
तमापृच्छ्याभ्यनुज्ञातो जगाम त्रिदशालयम् ॥ ३ ॥
स मुहूर्तं गते तस्मिन्देवलोकं मुनिस्तदा ।
जगाम तमसातीरं जाह्नव्या अविदूरतः ॥ ४ ॥
तत्तु तीरं समासाद्य तमसाया मुनिस्तदा ।
शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम् ॥ ५ ॥
अकर्दममिदं तीर्थं भरद्वाज निशामय ।
रमणीयं प्रसन्नं च सज्जनानां मनो यथा ॥ ६ ॥
इदं तीर्थं समं सौम्यं सुजलं सूक्ष्मवालुकम् ।
न्यस्यतां कलशस्तात दीयतां वल्कलं मम ॥ ७ ॥
इदमेवावगाहिष्ये तमसातीर्थमुत्तमम् ।
यथा कालात्ययो न स्यात्तथा साधु विधीयताम् ॥ ८ ॥
स गुरोर्वचनाच्छीघ्रमागम्य पुनराश्रमात् ।
आनीय वल्कलं तस्मै गुरवे प्रत्यवेदयत् ॥ ९ ॥
स शिष्यहस्तादादाय परिधाय च वल्कलम् ।
अवगाह्य जलं स्नात्वा जप्त्वा जप्यं च वाग्यतः ॥ १०

तर्पयित्वा च विधिवत्तोयेन पितृदेवताः ।
निरीक्षमाणो व्यचरत्सर्वतो विपुलं वनम् ॥ ११ ॥
ततः स तमसातीरे विचरतोरभीतवत् ।
ददर्श क्रौञ्चयोस्तत्र मिथुनं चारुदर्शनम् ॥ १२ ॥
तस्मात्तु मिथुनादेकमागत्यानुपलक्षितः ।
जघान वैरनिलयो निषादो मुनिसंनिधौ ॥ १३ ॥
तं शोणितपरीताङ्गं चेष्टमानं महीतले ।
दृष्ट्वा क्रौञ्ची रुरोदार्ता करुणं खे परिभ्रमा ॥ १४ ॥
वियुक्ता पतिना तेन द्विजेन सहचारिणा ।
ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै ॥ १५ ॥
तथाविधं द्विजं दृष्ट्वा निषादेन निपातितम् ।
ऋषेर्धर्मात्मनस्तस्य कारुण्यं समजायत ॥ १६ ॥
ततः कारुण्यवेदित्वादधर्मोयमिति द्विजः ।
निशाम्य करुणं क्रौञ्चीं क्रन्दन्तीं तां जगाविदम् ॥ १७ ॥
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ १८ ॥
तस्यैवं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः ।
शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥ १९ ॥
स मुहूर्तमनुध्यात्वा वाक्यं तत्परिमृश्य च ।
शिष्यमाह स्थितं पार्श्वे भरद्वाजमिदं वचः ॥ २० ॥
पादबद्धोक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥ २१ ॥
शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम् ।
तथेति प्रतिजग्राह गुरोः प्रीतिं विदर्शयन् ॥ २२ ॥
सोभिषेकं ततः कृत्वा तीर्थे तस्मिन्यथाविधि ।
तमेव चिन्तयन्नर्थमाश्रमाय न्यवर्तत ॥ २३ ॥
तमन्वयाद्विनीतात्मा भरद्वाजो महामुनिम् ।
पूर्णं कलशमादाय शिष्यः परमसंमतः ॥ २४ ॥

स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् ।
उपविश्याश्रमे तूष्णीं ध्यानमेवान्वपद्यत ॥ २५ ॥
आजगाम ततो ब्रह्मा लोककर्ता स्वयंप्रभुः ।
चतुर्मुखो महातेजा द्रष्टुं तमृषिसत्तमम् ॥ २६ ॥
वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः ।
प्राञ्जलिः प्रयतो भूत्वा तस्थौ परमविस्मितः ॥ २७ ॥
प्रणम्य विधिवच्चैनं पृष्ट्वानामयमव्ययम् ।
पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः ॥ २८ ॥
अथोपविश्य भगवानासने परमार्चिते ।
वाल्मीकये च ऋषये संदिदेशासनं ततः ॥ २९ ॥
उपविष्टे तदा तस्मिन्साक्षाल्लोकपितामहे ।
तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ॥ ३० ॥
शोचन्नेव मुहुः क्रौञ्चीं श्लोकं चेमं पुनः पुनः ।
जगावन्तर्गतमना भूत्वा शोकपरायणः ॥ ३१ ॥
पापात्मना कृतं कष्टं व्याधेनानर्थबुद्धिना ।
यस्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात् ॥ ३२ ॥
तमुवाच ततो ब्रह्मा प्रहसन्मुनिपुंगवम् ।
श्लोक एव त्वया बद्धो नात्र कार्या विचारणा ॥ ३३ ॥
स्वच्छन्दादेव ते ब्रह्मन्प्रवृत्तेयं सरस्वती ।
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ॥ ३४ ॥
धर्मात्मनो गुणवतो लोके रामस्य धीमतः ।
वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् ॥ ३५ ॥
रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ।
रामस्य सहसौमित्रे राक्षसानां च सर्वशः ॥ ३६ ॥
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ।
तच्चाप्यवितथं सर्वं विदितं ते भविष्यति ॥ ३७ ॥
न ते वागनृता काव्ये मत्प्रसादाद्भविष्यति ।
कुरु रामकथां दिव्यां श्लोकबद्धां मनोरमाम् ॥ ३८ ॥

यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥ ३९ ॥
यावद्रामायणकथा त्वत्कृता प्रचरिष्यति ।
तावदूर्ध्वगतिश्चैव मल्लोकेषु निवत्स्यसि ॥ ४० ॥
इत्युक्त्वा भगवान्ब्रह्मा तत्रैवान्तरधीयत ।
ततः सशिष्यो वाल्मीकिर्विस्मयं परमं ययौ ॥ ४१ ॥
तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं पुनः ।
मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः ॥ ४२ ॥
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा ।
सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः ॥ ४३ ॥
तस्य बुद्धिरियं जाता महर्षेर्भावितात्मनः ।
कृत्स्नं रामायणं श्लोकैरीदृशैः करवाण्यहम् ॥ ४४ ॥
उदारवृत्तार्थपदैर्मनोरमै-
स्ततः स रामस्य चकार कीर्तिमान् ।
समाक्षरैः श्लोकशतैर्यशस्विनो
यशस्करं काव्यमुदारधीर्मुनिः ॥ ४५ ॥

इति बालकाण्डे ब्रह्मागमनं नाम द्वितीयः सर्गः ॥ २ ॥

---

श्रुत्वा पूर्वं काव्यबीजं देवर्षेर्नारदादृषिः ।
लोकादन्विष्य भूयश्च विस्तरं चरितव्रतः ॥ १ ॥
उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः ।
प्राचीनाग्रेषु दर्भेषु काव्यस्यान्वेषते गतिम् ॥ २ ॥
रामलक्ष्मणसीताभी राज्ञा दशरथेन च ।
सभार्येण सराष्ट्रेण सान्तःपुरजनेन च ॥ ३ ॥
आसितं भाषितं चैव मतं यथाप्यनुष्ठितम् ।
तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति ॥ ४ ॥
स्त्रीतृतीयेन च तदा यत्प्राप्तं चरता वने ।
सत्यसंधेन रामेण तत्सर्वमन्ववेक्षत ॥ ५ ॥

त्रिकालदर्शी तत्सर्वं तपोयोगबलेन तु ।
ददर्श तत्र प्रत्यक्षं पाणावामलकं यथा ॥ ६ ॥
दृष्ट्वा चानन्तरं सम्यक्चक्रे रामस्य चेष्टितम् ।
समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ७ ॥
स यथा कथितं पूर्वं नारदेन महात्मना ।
रघुवंशस्य चरितं चकार भगवान्मुनिः ॥ ८ ॥
जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम् ।
लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम् ॥ ९ ॥
नाना चित्राः कथाश्चान्या विश्वामित्रसहायने ।
जानक्याश्च विवाहं च धनुषश्चापि भञ्जनम् ॥ १० ॥
रामरामविवादं च गुणान्दाशरथेस्तदा ।
तथाभिषेकं रामस्य कैकेय्या दुष्टभावताम् ॥ ११ ॥
विघातं चाभिषेकस्य रामस्य च विवासनम् ।
राज्ञः शोकं विलापं च मोहं मरणमेव च ॥ १२ ॥
प्रकृतीनां विषादं च तथैव च विसर्जनम् ।
निषादाधिपसंवादं सूतस्य च निवर्तनम् ॥ १३ ॥
गङ्गायाश्चापि संतारं भरद्वाजस्य दर्शनम् ।
भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ॥ १४ ॥
वास्तुकर्म निवेशं च भरतागमनं तथा ।
प्रसादन च रामस्य पितुश्च सलिलक्रियाम् ॥ १५ ॥
पादुकास्वभिषेकं च नन्दिग्रामे निवासनम् ।
दण्डकारण्यगमनं सुतीक्ष्णेन समागमम् ॥ १६ ॥
अनसूयासमास्यां च अङ्गरागस्य चार्पणम् ।
शरभङ्गाश्रमे वासं वासवस्य च दर्शनम् ॥ १७ ॥
दर्शनं चाप्यगस्त्यस्य धनुषो ग्रहणं तथा ।
समागमं विराधेन वासं पञ्चवटे तथा ॥ १८ ॥
हासं शूर्पणखायाश्च विरूपकरणं तथा ।
वधं खरत्रिशिरसोरुत्थानं रावणस्य च ॥ १९ ॥

मारीचस्य वधं चैव वैदेह्या हरणं तथा ।
राघवस्य विलापं च गृध्रराजनिबर्हणम् ॥ २० ॥
कबन्धग्रहणं चैव पम्पायाश्चापि दर्शनम् ।
शबर्या दर्शनं चैव हनुमद्दर्शनं तथा ॥ २१ ॥
विलापं चैव पम्पायां राघवस्य महात्मनः ।
ऋश्यमूकस्य गमनं सुग्रीवेण समागमम् ॥ २२ ॥
प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ।
वालिप्रमथनं राज्ये सुग्रीवप्रतिपादनम् ॥ २३ ॥
ताराविलापं समयं वर्षरात्रिनिवासनम् ।
कोपं राघवसिंहस्य बलानामुपसंग्रहम् ॥ २४ ॥
दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ।
अङ्गुलीयप्रदानं च ऋक्षस्य बिलदर्शनम् ॥ २५ ॥
प्रायोपवेशनं चापि संपातेश्चापि दर्शनम् ।
पर्वतारोहणं चैव सागरस्य च लङ्घनम् ॥ २६ ॥
समुद्रवचनाच्चैव मैनाकस्य च दर्शनम् ।
सिंहिकायाश्च निधनं लङ्कानिलयदर्शनम् ॥ २७ ॥
रात्रिप्रवेशं लङ्कायां चिन्तां हनुमतस्तथा ।
आपानभूमिगमनमवरोधस्य दर्शनम् ॥ २८ ॥
अशोकवनिकायानं सीतायाश्चापि दर्शनम् ।
संभाषणं च मैथिल्या अभिज्ञानस्य चार्पणम् ॥ २९ ॥
मणिप्रदानं सीताया वृक्षभङ्गं तथैव च ।
राक्षसीविद्रवं चैव किंकराणां निबर्हणम् ॥ ३० ॥
ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम् ।
प्रतिप्लवनमेवाथ मधूनां भक्षणं तथा ॥ ३१ ॥
राघवाश्वासनं चैव मणिनिर्यातनं तथा ।
संगमं च समुद्रेण नलसेतोश्च बन्धनम् ॥ ३२ ॥
प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् ।
विभीषणेन संसर्गं वधोपायनिवेदनम् ॥ ३३ ॥

कुम्भकर्णस्य निधनं मेघनादनिबर्हणम्।
रावणस्य विनाशं च सीतावाप्तिं तथैव च ॥ ३४ ॥
विभीषणाभिषेकं च पुष्पकस्य च दर्शनम्।
ब्रह्मादिदेवागमनं सीतायाः प्रत्ययं प्रति ॥ ३५ ॥
पुष्पकारोहणं चैव भरद्वाजसमागमम्।
प्रेषणं वायुपुत्रस्य भरतेन समागमम् ॥ ३६ ॥
रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम्।
सीतायाश्च परित्यागं प्रकृतीनां च रञ्जनम् ॥ ३७ ॥
अनागतं च यत्किंचिद्रामस्य वसुधातले।
तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः ॥ ३८ ॥

इति बालकाण्डे काव्योपसंक्षेपो नाम तृतीयः सर्गः ॥ ३ ॥

---

कृत्वा तु तन्महाप्राज्ञः काव्यं रामायणाह्वयम्।
चिन्तयामास कोन्वेतल्लोकेस्मिन्प्रथयेदिति ॥ १ ॥
तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः।
अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ ॥ २ ॥
कुशीलवौ स धर्मात्मा राजपुत्रौ यशस्विनौ।
भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ ॥ ३ ॥
स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ।
वेदोपग्रहणार्थाय तावग्राहयत प्रभुः ॥ ४ ॥
काव्यं रामायणं यत्र सीतायाश्चरितं महत्।
पौलस्त्यवधसंयुक्तं श्रोतृश्रुतिसुखावहम् ॥ ५ ॥
पाठे गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम्।
जातिभिः सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥ ६ ॥
शृङ्गारवीरबीभत्सरौद्रहास्यभयानकैः।
करुणाद्भुतशान्तैश्च युक्तं काव्यरसैरपि ॥ ७ ॥
बहुमानाच्च वाल्मीकेः काव्यस्य च सुखादपि।
वाग्विधेयं यदा ताभ्यां कृतं तच्चाप्यशेषतः ॥ ८ ॥

स तौ मूर्धन्युपाघ्राय वाल्मीकिर्भगवानृषिः ।
प्रोवाचेदं तदा वाक्यं प्रणतावग्रतः स्थितौ ॥ ९ ॥
गीयतामिदमाख्यानं भवद्भ्यामृषिसंसदि ।
राजर्षीणां पुण्यकृतां साधूनां च समागमे ॥ १० ॥
तौ तु गान्धर्वतत्त्वज्ञौ तालमूर्छनकोविदौ ।
भ्रातरौ स्वरसंपन्नौ गन्धर्वाविव रूपिणौ ॥ ११ ॥
बिम्बादिवोद्धृतौ बिम्बौ रामदेहात्तथापरौ ।
यथोपदिष्टमृषिणा जगतुः सुसमाहितौ ॥ १२ ॥
तौ कदाचित्समेतानामृषीणां भावितात्मनाम् ।
आसीनानां समीपस्थाविदं काव्यमगायताम् ॥ १३ ॥
श्रुत्वा तु मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ।
साधु साध्विति तावूचुः परं विस्मयमागताः ॥ १४ ॥
ते प्रीतमनसश्चैव मुनयो धर्मवत्सलाः ।
प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशीलवौ ॥ १५ ॥
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ।
चिरवृत्तमपि ह्येतत्प्रत्यक्षमिव दर्शितम् ॥ १६ ॥
एवं प्रशस्यमानौ तौ तपःश्लाघ्यैर्महर्षिभिः ।
संरक्ततरमत्यर्थं मधुरं तावगायताम् ॥ १७ ॥
प्रीतः कश्चिन्मुनिस्ताभ्यां पानीयकलशं ददौ ।
कश्चिद्वनफलं स्वादु वल्कलं कश्चिदीप्सितम् ॥ १८ ॥
अन्यः कृष्णाजिनं प्रादाद्यज्ञसूत्रमथापरः ।
कश्चित्कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः ॥ १९ ॥
ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः ।
जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः ॥ २० ॥
यज्ञभाण्डमृषिः कश्चित्काष्ठभारं तथापरः ।
औदुम्बरीं बृसीमन्यः स्वस्ति केचित्तथावदन् ॥ २१ ॥
आयुष्यमपरे प्राहुर्मुदा तत्र महर्षयः ।
ददुश्चैव वरान्सर्वे मुनयः सत्यवादिनः ॥ २२ ॥

एव पूर्वमिद काव्य मुनिभि प्रतिपूजितम् ।
जीवभूत मनुष्याणा कवीनामुपजीवनम् ॥ २३ ॥
प्रशस्यमानौ सर्वत्र एतावपि हि गायनौ ।
राजधानीषु राज्ञा च समाजेष्वभ्यगायताम् ॥ २४ ॥
अथाश्वमेधे रामोपि तावुपश्रुत्य गायनौ ।
सत्कृत्यानाययामास पुरुषैराप्तकारिभि ॥ २५ ॥
आसीन काञ्चने दिव्ये स च सिंहासने प्रभु ।
उपोपविष्टे सचिवैर्भ्रातृभिश्च समन्वित ॥ २६ ॥
दृष्ट्वाथ रूपसपन्नौ विनीतौ भ्रातरावुभौ ।
उवाच लक्ष्मण राम सर्वांश्चैव सभासद ॥ २७ ॥
श्रूयतामेतदाख्यानमनयोर्देववर्चसो ।
विचित्रार्थपद सम्यग्गायतोर्मधुरस्वरम् ॥ २८ ॥
तौ चापि मधुर रक्त स्वचित्तायतनि स्वनम् ।
तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् ॥ २९ ॥
ह्लादयत्सर्वगात्राणि मनांसि हृदयानि च ।
श्रोत्राशयसुख गेय तद्बभौ जनससदि ॥ ३० ॥
इमौ हि बालौ नृपलक्षणान्वितौ
कुशीलवौ चैव तपोवनाश्रयौ ।
ममेति वृत्त किल गेयमद्भुत
महर्षिवाल्मीकिकृत प्रगास्यत ॥ ३१ ॥
ततस्तु तौ राघवसप्रचोदिता
वगायता काव्यमिद यथाक्रमम् ।
स चापि राम सहित सभासदै
र्बभूव तत्रार्पितचेतनस्तदा ॥ ३२ ॥

इति बालकाण्डे कुशीलवयोरध्यापन नाम चतुर्थ सर्ग ॥४॥

---

सागरान्ता मही येषामासीद्वीर्योर्जिता किल ।
आ मनो पुण्यकीर्तीना राज्ञाममिततेजसाम् ॥ १ ॥

सगरः पूर्वजो येषां सागरो येन खानितः ।
षष्टिः पुत्रसहस्राणि यं यान्तं पर्यवारयन् ॥ २ ॥
इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् ।
महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ॥ ३ ॥
तदिदं वर्तयिष्यावः सर्वं निखिलमादितः ।
धर्मकामार्थसंयुक्तं श्रोतव्यमनसूयता ॥ ४ ॥
कोशलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ५ ॥
अयोध्या नाम तत्रास्ति नगरी लोकविश्रुता ।
मनुना मानवेन्द्रेण पुरैव निर्मिता स्वयम् ॥ ६ ॥
आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा नानासंस्थानशोभिता ॥ ७ ॥
सुविभक्तान्तरद्वारा सुविभक्तमहापथा ।
शोभिता राजमार्गेण जलसंसक्तरेणुना ॥ ८ ॥
अविच्छिन्नान्तरगृहा समभूमौ निवेशिता ।
कपाटतोरणवती हर्म्यप्रासादसंकुला ॥ ९ ॥
दृढद्वारप्रतोलीका सुविभक्तान्तरापणा ।
दुर्गगम्भीरपरिखा नानायुधसमन्विता ॥ १० ॥
राजा दशरथो नाम महात्मा राष्ट्रवर्धनः ।
तां पुरीं पालयामास स्वपुरीं मघवानिव ॥ ११ ॥
उद्यानाम्रवनोपेतां सुमहाशालमेखलाम् ।
अष्टापदपदालेख्यै रम्यामालिखितामिव ॥ १२ ॥
सभोद्यानप्रपाभिश्च रुचिराभिरलंकृताम् ।
देवतायतनैश्चैव विमानैरपि शोभिताम् ॥ १३ ॥
नित्योत्सवसमाजाढ्यां हृष्टपुष्टजनैर्युताम् ।
आरोहमिव रत्नानां प्रतिष्ठानमिव श्रियः ॥ १४ ॥
वरान्नपानकलिलां शालितण्डुलभोजनाम् ।
धूपमाल्यहविर्गन्धैर्देवैश्चाप्यधिवासिताम् ॥ १५ ॥

हस्त्यश्वरथसंपूर्णां नानायानसमाकुलाम् ।
नानापार्थिवदूतैश्च वणिग्भिश्चोपशोभिताम् ॥ १६ ॥
उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ।
सर्वयन्त्रायुधवतीमुपेतां सर्वशिल्पिभिः ॥ १७ ॥
सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् ।
वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम् ॥ १८ ॥
मृदङ्गवेणुवीणानां रम्यैः शब्दैर्निनादिताम् ।
ब्रह्मघोषस्वनवतीं धनुःस्वननिनादिताम् ॥ १९ ॥
लोकपालोपमैः शूरैः सर्वशास्त्रार्थपारगैः ।
गुप्तां योधशतैश्चापि नागैर्भोगवतीमिव ॥ २० ॥
वराभिमङ्गिर्गुणिभिः स्वलंकृतां
द्विजोत्तमैर्वेदविदां पुरोगमैः ।
सहस्रदैः सत्यतपोदयान्वितै
र्महर्षिकल्पैर्यतिभिर्यतात्मभिः ॥ २१ ॥

इति बालकाण्डे अयोध्यावर्णना नाम पञ्चमः सर्गः ॥ ५ ॥

---

पुर्यां तस्यामयोध्यायां वेदवित्सर्वसंग्रहः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १ ॥
इक्ष्वाकूणामतिरथो यज्वा धर्मपरो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २ ॥
बलवान्विजितामित्रो नीतिमान्विजितेन्द्रियः ।
धनैश्च संचयैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३ ॥
आदिराजो मनुरिव प्रजानां परिरक्षिता ।
राजा दशरथो नाम बभूव राष्ट्रवर्धनः ॥ ४ ॥
तेन सत्याभिसंधेन त्रिवर्गमनुतिष्ठता ।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५ ॥
तस्मिन्पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ ६ ॥

नाल्पसंनिचयः कश्चिदासीत्तस्मिञ्जनः पुरे ।
कुटुम्बी यो न सिद्धार्थो गवाश्वधनधान्यवान् ॥ ७ ॥
तत्र कुमावृतो नासीद्दरिद्रो वा पुरोत्तमे ।
नामृष्टभुङ्न चादाता नासुगन्धी न चानृजुः ॥ ८ ॥
नाकुण्डली नामकुटी नास्रग्वी नाविलेपनी ।
नाहस्ताभरणोपेतो न चाप्यासीदनिष्कभृत् ॥ ९ ॥
न कदर्यः कश्चिदासीन्नानृती न शठोऽपि वा ।
न मानी न च संरम्भी न नृशंसो न कत्थनः ॥ १० ॥
नामहात्मा न पिशुनो न परस्वोपजीवकः ।
न दीनो नापि चोद्विग्नो नातुरो न भयातुरः ॥ ११ ॥
सुव्रता धृतिमन्तश्च नरा आसंस्तथा स्त्रियः ।
नराः स्वदारनिरता नार्यश्चासन्पतिव्रताः ॥ १२ ॥
रूपचातुर्यमाधुर्यशीलाचारगुणान्विताः ।
नार्यश्चासन्नयोध्यायां मृष्टाभरणवाससः ॥ १३ ॥
स्वकर्मनिरताश्चासन्सर्वे तत्र द्विजातयः ।
यज्ञाध्ययननित्याश्च विरताश्च परिग्रहात् ॥ १४ ॥
नानाहिताग्निर्नायज्वा विप्रो नाप्यसहस्रदः ।
न नास्तिको नानृतवाङ् कश्चिदबहुश्रुतः ॥ १५ ॥
क्षत्रं ब्रह्ममुखं नासीद्वैश्याः क्षत्रमनुव्रताः ।
शूद्राः स्वधर्मनिरतास्त्रीन्वर्णानुपचारिणः ॥ १६ ॥
वर्णश्रेष्ठान्पूजयन्ति पितॄन्देवातिथींस्तथा ।
न योनिसंकरश्चासीत्तत्र नाचारसंकरः ॥ १७ ॥
आसन्दीर्घायुषस्तत्र नराः सत्यपरायणाः ।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ १८ ॥
एवमिक्ष्वाकुनाथेन पालिता सा मवत्पुरी ।
यथा पुरस्तान्मनुना मानवेन्द्रेण भूरियम् ॥ १९ ॥
योधानामग्निकल्पानां संयुगेष्वनिवर्तिनाम् ।
गुप्ता पुरी सहस्रैः सा सिंहैरिव गिरेर्गुहा ॥ २० ॥

काम्बोजदेशजैश्चापि हयैर्वानायुजैस्तथा ।
नदीजैर्वाह्लिकैश्चैव पूर्णा हरिहयोपमैः ॥ २१ ॥
विन्ध्यपर्वतजैश्चैव नागैर्हैमवतैस्तथा ।
सत्त्ववीर्यगुणोपेतैः शूरैरव्यालचेष्टितैः ॥ २२ ॥
ऐरावतकुलीनैश्च महापद्मकुलैस्तथा ।
अञ्जनादपि निष्पन्नैर्वामनादपि च द्विपैः ॥ २३ ॥
भद्रैर्मन्द्रैर्मृगैश्चैव मातङ्गैर्दन्तहस्तिभिः ।
नित्यमत्तैः समाकीर्णा नागैरचलसंनिभैः ॥ २४ ॥
आ योजनाद्वा भूयो वा सत्यनामा प्रकाशते ।
सा पुरी यत्र राजाभूत्पुरा दशरथोनघः ॥ २५ ॥
तां सत्यनाम्नीं दृढतोरणार्गलां
गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसंकुलां
शशास वै शक्रसमो महीपतिः ॥ २६ ॥

इति बालकाण्डे राजवर्णना नाम षष्ठः सर्गः ॥ ६ ॥

---

ऋत्विजौ मन्त्रिणौ चैव तस्यास्तामृषिसत्तमौ ।
वसिष्ठो वामदेवश्च वेदवेदाङ्गपारगौ ॥ १ ॥
अष्टावन्ये बभूवुश्च तस्यामात्या महीपतेः ।
शुचयश्चानुरक्ताश्च राजकार्येषु नित्यशः ॥ २ ॥
धृष्टिर्जयन्तो विजयः सिद्धार्थोप्यर्थसाधकः
अशोको धर्मपालश्च सुमन्त्रश्चाष्टमोभवत् ॥ ३ ॥
विद्याविनीता ह्रीमन्तः कुलीना नियतेन्द्रियाः ।
मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ ४ ॥
ते गुणैरुपसंपन्नाः सर्वे सुविपुलौजसः ।
पर्युपासत राजानं वसवो वासवं यथा ॥ ५ ॥
परापवादविरता गुणाढ्या न च गर्विताः ।
आर्यवेषाः सुमनसो न च संदिग्धनिश्चयाः ॥ ६ ॥

कुशला व्यवहारेषु विरागाः सर्वसंमताः ।
वर्धयन्तश्च धर्मेण कोपमूलं महीपतेः ॥ ७ ॥
परस्परेणाविरुद्धाः प्रीतिमन्तः प्रियंवदाः ।
रक्षितारश्च वर्णानां नित्यं विषयवासिनाम् ॥ ८ ॥
नरेन्द्रवचनासक्तचेतसस्तत्परायणाः ।
मन्त्रसंवरणे शक्ताः शक्ताः सूक्ष्मासु बुद्धिषु ॥ ९ ॥
तेषामविदितं किंचित्स्वेषु नास्ति परेषु च ।
क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् ॥ १० ॥
संधिविग्रहतत्त्वज्ञाः प्रकृत्या संपदान्विताः ।
हितार्थं च नरेन्द्रस्य जाग्रतो नयचक्षुषा ॥ ११ ॥
क्रोधात्कामार्थहेतोर्वा न ब्रूयुरनृतं क्वचित् ।
अतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषाणां बलाबलम् ॥ १२ ॥
पुत्रेपि च प्राप्तदोषे धर्मतो दण्डपातिनः ।
अद्रोग्धारश्च धर्मेण शत्रोरप्यकृतागसः ॥ १३ ॥
नासीत्पुरे वा राष्ट्रे वा तस्करो नाशुचिर्नरः ।
न दुष्टः कश्चिदप्यासीत्परदाराभिमर्षकः ॥ १४ ॥
आसंस्तदानुगृहीताः सर्वे वर्णाः स्वकर्मभिः ।
प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तम् ॥ १५ ॥
अमात्यैरीदृशैस्तैस्तु राजा दशरथोन्वितः ।
धर्मतः पालयामास पृथिवीमनुरञ्जयन् ॥ १६ ॥
अवेक्षमाणश्चारेण महीं सूर्य इवांशुभिः ।
नाध्यगच्छद्विशिष्टं च तुल्यं वा शत्रुमात्मनः ॥ १७ ॥
तैर्मन्त्रिभिर्मन्त्रहिते निविष्टै-
र्विद्वद्भिराप्तैः कुशलैः समर्थैः ।
स पार्थिवो दीप्तिमवाप युक्त-
स्तेजोमयैर्गोभिरिवोदितोर्कः ॥ १८ ॥

इति बालकाण्डे अमात्यवर्णना नाम सप्तमः सर्गः ॥ ७ ॥

तस्य त्वेवंप्रभावस्य धार्मिकस्य महात्मनः।
सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥ १ ॥
तस्य चिन्तयतो बुद्धिरुत्पन्नेयं महामतेः।
सुतार्थं वाजिमेधेन किमर्थं न यजाम्यहम् ॥ २ ॥
सुनिश्चितां मतिं कृत्वा यष्टव्ये वसुधाधिपः।
मन्त्रिभिः सह संमन्त्र्य तैः स्वामिहितकारिभिः ॥ ३ ॥
तत्राब्रवीदिदं राजा सुमन्त्रं मन्त्रिसत्तमम्।
शीघ्रमानय मे सर्वान्वसिष्ठप्रमुखान्गुरून् ॥ ४ ॥
एवमुक्तो नृपतिना सुमन्त्रो वाक्यमब्रवीत्।
नरेन्द्र श्रूयतां तावत्पुराणे यन्मया श्रुतम् ॥ ५ ॥
सनत्कुमारो भगवान्पुरा कथितवान्कथाम्।
भविष्यं विदुषां मध्ये तव पुत्रसमुद्भवम् ॥ ६ ॥
अस्तीह काश्यपसुतो विभाण्डक इति श्रुतः।
ऋष्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति ॥ ७ ॥
स वने जातसंवृद्धो मुनिर्वनचरैः सह।
नान्यं प्रज्ञास्यते कंचिन्मानवं पितृवर्जितम् ॥ ८ ॥
तस्याक्षुण्णं ब्रह्मचर्यं भविष्यति महात्मनः।
लोकेषु प्रथितं चोग्रं तपस्तस्य भविष्यति ॥ ९ ॥
तस्यैवं वर्तमानस्य कालः समभिवर्त्स्यति।
अग्निं शुश्रूषमाणस्य पितरं च यशस्विनम् ॥ १० ॥
एतस्मिन्नेव काले तु लोमपादः प्रतापवान्।
अङ्गेषु प्रथितो राजा भविष्यति महाबलः ॥ ११ ॥
तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा।
अनावृष्टिर्जनपदे क्षयाय बहुवार्षिकी ॥ १२ ॥
अनावृष्ट्या तया राजा स तदा परिकर्षितः।
प्रक्ष्यति ज्ञानिनो विप्राननावृष्टिप्रतिक्रियाम् ॥ १३ ॥
भवन्तः श्रुतवन्तो वै लोकवृत्तान्तवेदिनः।
समादिशन्तु नियमं प्रायश्चित्तं यथा भवेत् ॥ १४ ॥

लोमपादवचः श्रुत्वा ते वक्ष्यन्ति द्विजोत्तमाः ।
विभाण्डकसुतं राजन्सर्वोपायैरिहानय ॥ १५ ॥
आनाय्य तु महीपाल ऋष्यशृङ्गमृषेः सुतम् ।
प्रयच्छास्मै सुतां शान्तां विधिना सुसमाहितः ॥ १६ ॥
तेषां तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते ।
केनोपायेन वै शक्य इहानेतुं स वीर्यवान् ॥ १७ ॥
स निश्चयं स्वयं राजा यदा नाधिगमिष्यति ।
तदामात्यान्समाहूय प्रतिमस्यति निश्चयम् ॥ १८ ॥
पुरोहितममात्यांश्च प्रेषयिष्यति यत्नतः ।
आनयध्वं महाभागमृष्यशृङ्गं सुसत्कृतम् ॥ १९ ॥
ते तु राज्ञो वचः श्रुत्वा व्यथिता विक्लवाननाः ।
न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ॥ २० ॥
वक्ष्यन्ति चिन्तयित्वा च तस्योपायान्बहूंस्ततः ।
आनेष्यामो वयं वृत्त न च दोषो भविष्यति ॥ २१ ॥
इति तेषां वचः श्रुत्वा भूयः स पृथिवीपतिः ।
तृतीयेहनि निश्चित्य मन्त्रिभिर्मन्त्रनिश्चयम् ॥ २२ ॥
वेश्याभिर्मुनिरूपाभिरानेष्यत ऋषेः सुतम् ।
लोभयित्वाभ्युपायेन स्वां पुरीं पितुराश्रमात् ॥ २३ ॥
भविष्यति ततो वृष्टिस्तस्य राष्ट्रे महीपतेः ।
तस्याभ्यागमनादेव मुनिपुत्रस्य धीमतः ॥ २४ ॥
ततः स राजा विधिवच्छान्तां तस्मै प्रदास्यति ।
स्विकां दुहितरं भार्यां रूपोदार्यगुणान्विताम् ॥ २५ ॥
एवं तस्य स जामाता भविष्यति महायशाः ।
लोमपादस्य राजर्षेरृष्यशृङ्गः प्रतापवान् ॥ २६ ॥
राज्ञो दशरथस्यापि स पुत्रानभिकाङ्क्षितान् ।
विधास्यते महायज्ञे हविर्हुत्वाग्निराग्निषु ॥ २७ ॥
सनत्कुमाराद्वचनमेतावद्व्याहृतं मया ।
ऋषिमध्ये कथयतो यथावदनुपूर्वशः ॥ २८ ॥

अथ हृष्टो दशरथः सुमन्त्रं प्रत्यभाषत ।
आनीतिर्ऋष्यशृङ्गस्य विस्तरेण त्वयोच्यताम् ॥ २९ ॥

इति बालकाण्डे सुमन्त्रवाक्यं नामाष्टमः सर्गः ॥ ८

---

इति दृष्टः सुमन्त्रस्तदाख्यातुमुपचक्रमे ।
आनीत ऋष्यशृङ्गोऽसौ येनोपायेन मन्त्रिभिः ॥ १ ॥
लोमपादमुवाचेदं सहामात्यः पुरोहितः ।
उपायो निरपायोयमस्माभिः परिचिन्तितः ॥ २ ॥
ऋष्यशृङ्गं वनचरं तपस्येकरसे रतम् ।
अनभिज्ञं च नारीणां विषयाणां सुखस्य च ॥ ३ ॥
इन्द्रियार्थैरभिमतैर्नरचित्तप्रमाथिभिः ।
पुरमानाययिष्यामो लोभयित्वा वनादितः ॥ ४ ॥
नावः सुचित्राः कल्प्यन्तां नानाकृत्रिमवृक्षकाः ।
कृत्रिमाणि फलान्यत्र सुगन्धीनि बहून्यपि ॥ ५ ॥
तत्र कृत्रिमवृक्षाश्च नानापक्षिसमन्विताः ।
नानावस्त्रसमावृताः सुगन्धपुष्पधारिणः ॥ ६ ॥
एवंविधासु नौकासु तिष्ठन्तु वरयोषितः ।
यौवनोन्मत्तनयनाः सर्वाः सर्वाङ्गशोभनाः ॥ ७ ॥
गीतवादित्रकुशला नृत्येषु कुशलास्तथा ।
उपायज्ञाः कलाज्ञाश्च वैशिके परिनिष्ठिताः ॥ ८ ॥
मुनिवेषपरिच्छन्नास्तत्र गच्छन्तु योषितः ।
रहस्युपेत्य ता एनमानयन्तु शुभव्रताम् ॥ ९ ॥
श्रुत्वा तथेति तं राजा प्रत्युवाच पुरोहितम् ।
मन्त्रिणश्च [illegible] धर्मात्मा तथा चक्रुश्च ते तदा ॥ १० ॥
सुसमृद्धास्तथा नौभिः प्रयाता यत्र वै मुनिः ।
वारमुख्याङ्गना गत्वा वनं प्रतिभयं महत् ॥ ११ ॥
आश्रमस्याविदूरस्था यत्नं कुर्वन्ति दर्शने ।
विभाण्डकभयोद्विग्ना लतागुल्मसमावृताः ॥ १२ ॥

चारयित्वा तु तमृषिमाश्रमादभिनिर्गतम् ।
तस्य संदर्शने तस्थुर्ऋषिपुत्रान्तिके पुनः ॥ १३ ॥
चित्रं संक्रीडमानास्ताः क्रीडनैर्विविधैस्तदा ।
कन्दुकैश्चैव गायन्त्यः क्रीडन्त्यः प्लुतवल्गितैः ॥ १४ ॥
सौगन्धिकेन माल्येन चूर्णैश्च सुसुगन्धिभिः ।
मदविह्वलिताः काश्चित्प्रपतन्त्युत्पतन्ति च ॥ १५ ॥
धूयमानैश्च वासोभिः सूक्ष्मैरङ्गदभूषणैः ।
परस्परं विनिघ्नन्त्यः शोभन्ते ललितेन च ॥ १६ ॥
नूपुरैः शिञ्जितरवैः कोकिलाभिरुतेन च ।
गन्धर्वनगरप्रख्यं प्रगीतमिव तद्वनम् ॥ १७ ॥
नयनभ्रूविकारैश्च हस्तैरम्बुजसंनिभैः ।
संज्ञाश्च ताः प्रकुर्वन्त्यः पुंसां हर्षविवर्धनाः ॥ १८ ॥
कामसंजननार्थाय ऋषिपुत्रस्य धीमतः ।
सर्वतः प्रकिरन्ति स्म ललमाना वराङ्गनाः ॥ १९ ॥
अभूतपूर्वं तद्दृष्ट्वा विस्मितः साध्वसं गतः ।
निश्चक्रामाश्रमात्तूर्णमृष्यशृङ्ग ऋषेः सुतः ॥ २० ॥
न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना ।
स्त्री वा पुमान्वा यच्चान्यत्सत्त्वं नगरराष्ट्रजम् ॥ २१ ॥
दृष्ट्वैव च सुचार्वङ्गीस्तास्तदा तनुमध्यमाः ।
विचित्रवेषाभरणा गायन्तीर्मधुरस्वरम् ॥ २२ ॥
स तं देशमुपागम्य जातकौतूहलो मुनिः ।
विभाण्डकसुतो जिज्ञुस्तस्थौ विस्मितमानसः ॥ २३ ॥
ताश्च तं विस्मितं दृष्ट्वा जगुः कलपदाक्षरम् ।
गीतं मधुरभाषिण्यो जहसुश्चायतेक्षणाः ॥ २४ ॥
अब्रुवंश्चैनमभ्यासमागम्य मदविह्वलाः ।
कोसि कस्य सुतश्च त्वं त्वरावान्समुपागतः ॥ २५ ॥
एकश्च विजनेरण्ये कस्माच्चरसि शंस नः ।
ज्ञातुं त्वां वयमिच्छामस्तत्त्वमाचक्ष्व नः प्रभो ॥ २६ ॥

अदृष्टपूर्वास्ता दृष्ट्वा कामरूपधराः स्त्रियः ।
हार्दात्तस्य मतिर्जाता व्याख्यातुं पितरं स्वकम् ॥ २७ ॥
पिता विभाण्डको नाम महर्षिः काश्यपो मम ।
तस्याहमौरसः पुत्र ऋष्यशृङ्ग इति श्रुतः ॥ २८ ॥
आश्रमोयमिहास्माकं समीपे शुभदर्शनाः ।
करिष्येतिथिपूजां वः सर्वेषां विधिपूर्वकम् ॥ २९ ॥
ऋषिपुत्रवचः श्रुत्वा सर्वासां मतिरास वै ।
तदाश्रमपदं द्रष्टुं प्रजग्मुः सहितास्ततः ॥ ३० ॥
गतानां तत्र वै पूजां चक्रे वैभाण्डकिस्तदा ।
इदमर्घ्यमिदं पाद्यमिदं मूलं फलं च नः ॥ ३१ ॥
प्रतिगृह्य तु तां पूजां सर्वा एव समुत्सुकाः ।
ऊचुश्चैनं सुमधुरं ता हसन्त्य इदं वचः ॥ ३२ ॥
अस्माकमपि मुख्यानि फलानीमानि सन्ति वै ।
फलान्याश्रमजातानि यदि ते रोचते द्विज ॥ ३३ ॥
प्रतिग्रहाण भद्रं ते भक्षयस्व च मा चिरम् ।
तीर्थोदकमिदं तावत्पीयतामिति सुव्रत ॥ ३४ ॥
अथास्मै प्रददुः स्वादून्मोदकान्फलसंनिभान् ।
अन्यांश्च विविधान्भक्ष्यान्मधूनि मधुराणि च ॥ ३५ ॥
तान्यास्वाद्य स तपस्वी फलानीति स्म मन्यते ।
अनास्वादितपूर्वाणि वने नित्यं निवासिना ॥ ३६ ॥
ततस्तु तं समालिङ्ग्य सर्वा हर्षसमुत्सुकाः ।
परिपस्वजिरे चैनं हसन्त्यो मदविह्वलाः ॥ ३७ ॥
श्रोत्रमूले चोपजेपुर्वदनैर्मधुगन्धिभिः ।
परिपस्पर्शिरे चैनं पीनैरुरसिजैः सुखम् ॥ ३८ ॥
मधूनि स सुगन्धीनि पीत्वा प्रमुदितोभवत् ।
सुकुमारैश्च तैरङ्गैस्ताभिः स्पृष्टो व्यमुह्यत ॥ ३९ ॥
आपृच्छ्य च तदा विप्रं व्रतचर्यां निवेद्य च ।
ऋषेर्भीताश्च ताः शीघ्रं गमनाय मतिं दधुः ॥ ४० ॥

स्वमाश्रमपदं तस्य व्यपदिश्याविदूरतः ।
गच्छन्ति स्मापदेशेन भीतास्तस्य पितुः स्त्रियः ॥ ४१ ॥
तासु प्रतिगतास्वेवमृष्यशृङ्गः समुत्सुकः ।
अस्वस्थहृदयस्तत्र दुःखार्तः परिवर्तते ॥ ४२ ॥
अथाजगाम भगवान्काश्यपः स्वं निवेशनम् ।
ध्यायमानं च तं दृष्ट्वा ऋष्यशृङ्गं समुत्सुकम् ।
पप्रच्छ काश्यपं पुत्रं कस्मान्मां नाभिनन्दसि ॥ ४३ ॥
चिन्तासागरमध्यस्थमद्य त्वां तात लक्षये ।
न हीदृशं तापसानां रूपं भवति कर्हिचित् ।
शीघ्रमाचक्ष्व मे पुत्र किमिदं वैकृतं कृतम् ॥ ४४ ॥
एवमुक्तः काश्यपेन प्रोवाच पितरं तदा ।
भगवन्निह मे दृष्टाः पुरुषाः शुभलोचनाः ॥ ४५ ॥
सुकुमारैरुरसिजैः पीनैरत्यद्भुतोपमैः ।
परिपस्पशिरे मां च गाढमालिङ्ग्य सर्वशः ॥ ४६ ॥
गायन्ति सुकुमाराणि मनोज्ञानि मुहुर्मुहुः ।
क्रीडन्ति चाद्भुताकारैर्नयनभ्रूविचेष्टितैः ॥ ४७ ॥
अब्रवीद्भगवाञ्छ्रुत्वा ऋष्यशृङ्गवचस्तदा ।
रक्षांसि तैस्तैः रूपेण तपसो नाशनाय वै ।
विश्रम्भस्ते न कर्तव्यस्तेषु पुत्र कथंचन ॥ ४८ ॥
एवमुक्त्वा ऋष्यशृङ्गं समाश्वास्य च काश्यपः ।
उषित्वा रजनीमेकामरण्यं स जगाम ह ॥ ४९ ॥
अथापरेद्युस्तं देशमाजगाम पुनस्त्वरन् ।
मनोज्ञरूपास्ता यत्र दृष्टा वै चारुमध्यमाः ॥ ५० ॥
ताश्च दृष्ट्वैव तं दूरादायन्तं काश्यपात्मजम् ।
प्रत्युद्गम्याब्रुवन्वाक्यं प्रहसन्त्य इदं तदा ॥ ५१ ॥
एह्याश्रमपदं रम्यं पश्यास्माकमिति प्रभो ।
तत्र पूजामवाप्याग्र्यां पुनराभ्यागमिष्यसि ॥ ५२ ॥

श्रुत्वैतद्वचन तासा स्त्रीणामतिमनोहरम् ।
गमनाय मति चक्रे ताश्चेन निन्युरङ्गना ॥ ९३ ॥
तत्र चानीयमाने तु विप्रे तस्मिन्महात्मनि ।
ववर्ष सहसा देवो जगत्प्रहादयंस्तदा ॥ ९४ ॥
विभाण्डकश्च विप्रर्षिराजगाम स्वमालयम् ।
वन्य मूलफल प्राप्य भारार्त सोविशत्तदा ॥ ९५ ॥
शून्यमावसथ दृष्ट्वा पुत्रदर्शनलालस ।
परिश्रान्तस्तथैवासावकृत्वा पादधावनम् ॥ ९६ ॥
चुक्रोश ऋष्यशृङ्गेति सर्वत प्रतिलोकयन् ।
न चापश्यत्सुत तत्र काश्यपो भगवानृषि ॥ ९७ ॥
निष्क्रम्य च वनात्तस्माद्ग्राम ददर्श काश्यप ।
ग्रामांश्च परिपप्रच्छ गोकुलानि च सर्वश ।
कस्यैष विषय सौम्यो ग्रामाश्च बहुगोकुला ॥ ९८ ॥
ऋषेर्वचनमाज्ञाय सर्वे ते गोपुजीविन ।
कृताञ्जलिपुटा भूत्वा विनये नाचचक्षिरे ॥ ९९ ॥
अङ्गेषु प्रथितो राजा लोमपाद इति श्रुत ।
तेनाभिसृष्टा ब्रह्मर्षे ग्रामा ह्येते सगोकुला ।
पूजार्थमृष्यशृङ्गस्य विभाण्डकसुतस्य वै ॥ ६० ॥
एवमुक्तस्तु स ऋषिर्दृष्ट्वा वै ध्यानचक्षुषा ।
भविष्यमेव तज्ज्ञात्वा प्रीतात्मा स न्यवर्तत ॥ ६१ ॥
ऋषिपुत्रोपि धर्मात्मा नौयानवरमास्थित
मेघनादेन महता कृत्वा सतिमिर नभ ।
महाजलौघवर्षेण राजधानीमुपाययौ ॥ ६२ ॥
वर्षेणेवागत विप्र स हि मत्वा नराधिप ।
प्रत्युद्गम्यार्चयाचक्रे शिरसा च महीं ययौ ।
अर्घ्यं च प्रददौ तस्मै पुरस्कृत्य पुरोहितम् ॥ ६३ ॥
सान्त पुरजनश्चैन प्रपेदे सान्त्वयन्निव ।
महार्हैश्चेप्सितैर्भोगैर्युयोजैन प्रसादयन् ॥ ६४ ॥

स्वयं चोपचचारैनं मन्युर्मा स्म भवेदिति ।
ददौ कन्यां तदा चास्मै भार्यां कमललोचनाम् ॥ १५ ॥
एवं स न्यवसत्तत्र तेन राज्ञाभिपूजितः ।
ऋष्यशृङ्गो महातेजाः शान्तया सह भार्यया ॥ १६ ॥

इति बालकाण्डे ऋष्यशृङ्गोपाख्यानं नाम नवमः सर्गः ॥ ९ ॥

---

भूय एव च राजेन्द्र शृणु मे वचनं हितम् ।
यथा स देवप्रवरः कथयामास धर्मवित् ॥ १ ॥
इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः ।
नाम्ना दशरथो राजा श्रीमान्सत्यप्रतिश्रवः ॥ २ ॥
सख्यं तस्याङ्गराजेन भविष्यति महात्मनः ।
कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥ ३ ॥
अपुत्रस्त्वङ्गराजो वै लोमपाद इति श्रुतः ॥
स राजानं दशरथं प्रार्थयिष्यति भूमिपः ॥ ४ ॥
अनपत्योस्मि मे कन्यां सखे दातुं त्वमर्हसि ।
शान्तां शान्तेन मनसा पुत्रार्थं वरवर्णिनीम् ॥ ५ ॥
श्रुत्वा दशरथो वाक्यं प्रकृत्या करुणात्मकः ।
दास्यते तां कन्यां शान्तामङ्गाधिपाय सः ॥ ६ ॥
प्रतिगृह्य च तां कन्यां स राजा विगतज्वरः ।
स्वपुरं यास्यति प्रीतः कृतार्थेनान्तरात्मना ॥ ७ ॥
तां कन्यामृष्यशृङ्गाय प्रदास्यति स पार्थिवः ।
ऋष्यशृङ्गोपि च प्रीतो लब्ध्वा भार्यां भविष्यति ॥ ८ ॥
तं स राजा दशरथो यष्टुकामः कृताञ्जलिः ।
ऋष्यशृङ्गं द्विजवरं वरयिष्यति धर्मवित् ॥ ९ ॥
यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च नरेश्वरः ।
लप्स्यते स ततः काममृषिपुत्राद्विशांपतिः ॥ १० ॥
पुत्राश्चास्य भविष्यन्ति चत्वारो मितविक्रमाः ।
वंशप्रतिष्ठानकराः सर्वलोकेषु विश्रुताः ॥ ११ ॥

एवं स देवर्षिवरो भविष्यमिदमुक्तवान् ।
सनत्कुमारो भगवान्पुरा मुनिसमागमे ॥ १२ ॥
स त्वं पुरुषशार्दूल समानय सुसत्कृतम् ।
विभाण्डकसुतं गत्वा वरयित्वात्मनो गुरुम् ॥ १३ ॥
इति श्रुत्वा दशरथः सुमन्त्रस्य सुमन्त्रितम् ।
स वसिष्ठमुपागम्य ततो वचनमब्रवीत् ॥ १४ ॥
सुमन्त्रोयं वदत्येवमनुज्ञां दातुमर्हसि ।
वसिष्ठोपि च तच्छ्रुत्वा तथेति प्रत्यपद्यत ॥ १५ ॥
सोनुज्ञातो वसिष्ठेन राजा सुप्रीतमानसः ।
सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः ॥ १६ ॥
वनानि सरितश्चैव व्यतिक्रम्य शनैः शनैः ।
लोमपादपुरीं प्राप्य प्रविवेश सुपूजितः ॥ १७ ॥
आसाद्य तं द्विजश्रेष्ठं लोमपादनिवेशने ।
ऋषिपुत्रं ददर्शासौ दीप्यमानमिवानलम् ॥ १८ ॥
ततो राजा लोमपादः पूजां तस्य चकार ह ।
सखित्वात्तस्य भूपस्य प्रहृष्टेनान्तरात्मना ॥ १९ ॥
एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः ।
सप्ताष्टदिवसं यावद्राजानमिदमब्रवीत् ॥ २० ॥
शान्ता तव सुता वीर सह भर्त्रा विशांपते ।
मदीयं नगरं यातु कार्यं हि महदुद्यतम् ॥ २१ ॥
तथेति राजा संश्रुत्य गमनं तस्य धीमतः ।
लोमपादोगमद्दकुमृषिपुत्राय धीमते ॥ २२ ॥
सख्यं संबन्धकं चैव सर्वं तत्प्रत्यवेदयत् ।
अयं राजा दशरथः सखा मे दयितो भृतम् ॥ २३ ॥
अनेन मेऽपत्याय दत्तेयं वरवर्णिनी ।
याचते पुत्रकामाय शान्ता प्रियतमात्मजा ॥ २४ ॥
सोयं ते श्वशुरो ब्रह्मन्यथैवाहं तथा नृपः ।
शरणं त्वामनुप्राप्तः पुत्रार्थी द्विजसत्तम ॥ २५ ॥

पुत्रकाममिमं तात त्वं याजयितुमर्हसि ।
तारयैनमितो गत्वा शान्तया सह भार्यया ॥ २६ ॥
ऋषिपुत्रोऽपि तच्छ्रुत्वा तथेत्याह नृपं तदा ।
नृपेण चाभ्यनुज्ञातः प्रययौ सह भार्यया ॥ २७ ॥
तावन्योन्याञ्जलिं कृत्वा स्नेहात्संश्लिष्य चोरसा ।
ननन्दतुर्दशरथो लोमपादश्च वीर्यवान् ॥ २८ ॥
अथ राजा दशरथः पुरुषानाप्तकारिणः ।
स्वपुरं प्रेषयामास प्रियाख्यानपुरःसरान् ॥ २९ ॥
क्रियतां मे पुरं शीघ्रं सर्वतः समलंकृतम् ।
धूपितं सिक्तसंमृष्टं पताकाभिरलंकृतम् ॥ ३० ॥
ततः प्रहृष्टाः पौरास्ते श्रुत्वा राजानमागतम् ।
तथा चक्रुर्यथाज्ञप्तं पुरे यत्नमशेषतः ॥ ३१ ॥
ततः स्वलंकृतं राजा नगरं प्रविवेश ह ।
शङ्खदुन्दुभिनिर्घोषैः पुरस्कृत्य द्विजर्षभम् ॥ ३२ ॥
ततो मुमुदिरे पौरा दृष्ट्वा राजानमागतम् ।
सहितमृषिपुत्रेण ज्वलितानलवर्चसा ॥ ३३ ॥
तमृष्यशृङ्गं स्वपुरं प्रवेश्य नृपतिस्तदा ।
कृतकृत्यमिवात्मानं मेने पूर्णमनोरथः ॥ ३४ ॥
अन्तःपुरजनश्चापि दृष्ट्वा शान्तामुपागताम् ।
मुमुदेऽपूजयच्चैनां सह भर्त्रा विलासिनीम् ॥ ३५ ॥
संपूज्यमानः स्तुतिभिर्यथा राज्ञा विशेषतः ।
उवास तत्र सुसुखं कंचित्कालं द्विजर्षभः ॥ ३६ ॥
उपास्यमानः शुशुभे शान्तया दिव्यरूपया ।
अरुन्धतीसहायो वा वसिष्ठो ब्रह्मणः सुतः ॥ ३७ ॥
इति बालकाण्डे ऋष्यशृङ्गागमनं नाम दशमः सर्गः ॥ १० ॥

---

अथ काले व्यतिक्रान्ते शिशिरे तदनन्तरम् ।
वसन्तसमये प्राप्ते राजा यष्टुं मनो दधे ॥ १ ॥

ततः प्रसाद्य शिरसा तं विप्रं देववर्चसम् ।
यज्ञाय वरयामास संतानार्थं कुलस्य वै ॥ २ ॥
तथेति च स राजानमुक्त्वा भूयोभ्यभाषत ।
संभारयाशु नृपते संभारान्यज्ञसाधकान् ॥ ३ ॥
ततो राजाब्रवीद्वाक्यं सुमन्त्रमभितः स्थितम् ।
शीघ्रमानय मे सूत गुरून्सर्वानशेषतः ॥ ४ ॥
स राजवचनाच्चापि सुमन्त्रस्त्वरितस्तदा ।
आनयामास तान्सर्वान्ब्राह्मणान्वेदपारगान् ॥ ५ ॥
सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ।
पुरोहितं वसिष्ठं च ये चाप्यन्ये द्विजोत्तमाः ॥ ६ ॥
तानागतान्पूजयित्वा राजा दशरथस्तदा ।
इदं धर्मार्थसहितं वचनं श्लक्ष्णमब्रवीत् ॥ ७ ॥
मम तातप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ।
तदहं हयमेधेन यजेयमिति मे मतिः ॥ ८ ॥
तदर्थं यष्टुमिच्छामि हयपूर्वेण कर्मणा ।
ऋषिपुत्रप्रभावेण भवतां चापि तेजसा ॥ ९ ॥
ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ।
वसिष्ठप्रमुखाः सर्वे प्रशशंसुश्च तं नृपम् ॥ १० ॥
सर्वथा प्राप्स्यसे पुत्रानीप्सितान्परमद्युतीन् ।
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ ११ ॥
ततः प्रीतोभवद्राजा श्रुत्वैतद्द्विजभाषितम् ।
सुमन्त्रप्रभृतींश्चेनमब्रवीन्मन्त्रिसत्तमान् ॥ १२ ॥
संभाराः संभ्रियन्तां मे गुरूणां वचनादिह ।
समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ॥ १३
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ।
शान्तयश्चापि वर्तन्तां यथाकल्पं यथाविधि ॥ १४
शक्यः कर्तुमयं यज्ञः सर्वेणापि महीक्षिता ।
नापराधो भवेत्कष्टो यद्यस्मिन्क्रतुसत्तमे ॥ १५ ॥

छिद्रं हि मृगयन्तेऽत्र यज्ञघ्ना ब्रह्मराक्षसाः ।
विघ्ने तु तस्य यज्ञस्य कर्ता सद्यो विनश्यति ॥ १६ ॥
तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ।
तथा विधानं क्रियतां समर्थाः करणेष्विति ॥ १७ ॥
तथेति च नृपस्याज्ञां मन्त्रिणः प्रतिगृह्य ते ।
यथाज्ञप्तमशेषेण चक्रुर्नृपतिशासनम् ॥ १८ ॥
ततो द्विजास्ते राजानमामन्त्र्य प्रतिपूज्य च ।
अविघ्नमस्त्वित्युक्त्वा च प्रतिजग्मुर्यथागतम् ॥ १९ ॥
ततः स गत्वा ताः पत्नीर्नरेन्द्रो हृदयंगमाः ।
उवाच दीक्षां विशत यक्ष्येऽहं सुतकारणात् ॥ २० ॥
तासां तेनातिकान्तेन वचनेन सुवर्चसाम् ।
मुखपद्मान्यशोभन्त पद्मानीव हिमात्यये ॥ २१ ॥

इति बालकाण्डे यज्ञकर्मचिन्ता नाम एकादशः सर्गः ॥ ११ ॥

---

पुनः प्राप्ते वसन्ते तु पूर्णः संवत्सरोऽभवत् ।
प्रसवार्थं गतो यष्टुं हयमेधेन वीर्यवान् ॥ १ ॥
अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च ।
अब्रवीत्प्रश्रितं वाक्यं प्रसवार्थं नराधिपः ॥ २ ॥
यज्ञो मे क्रियतां ब्रह्मन्यथाशास्त्रमनुष्ठितः ।
यथा न विघ्नः क्रियते यज्ञघ्नेनेह केनचित् ॥ ३ ॥
भवान्स्निग्धः सुहृच्चैव गुरुश्च परमो मम ।
वोढव्यो भवता चैष भारो यज्ञार्थमुद्यतः ॥ ४ ॥
तथेति च स राजानमब्रवीद्द्विजसत्तमः ।
करिष्ये सर्वमेवैतद्भवतो यदभीप्सितम् ॥ ५ ॥
ततोऽब्रवीद्द्विजान्वृद्धान्यज्ञकर्मसु निष्ठितान् ।
स्थापत्ये इह स्थाप्यन्तां वृद्धाः परमधार्मिकाः ॥ ६ ॥
कर्मान्तिका लेपकरा वर्धकाः खनका अपि ।
गणकाः शिल्पिनश्चान्ये तथैव नटनर्तकाः ॥ ७ ॥

ततोऽब्रवीच्छास्त्रविदः पुरुषान्सुबहुश्रुतान्।
यज्ञकर्म समीहन्तां भवन्तो राजशासनात्॥ ८॥
इष्टिं च बहुसाहस्रीं शीघ्रं चाह्वयत द्विजान्।
उपकार्याः क्रियन्तां च राज्ञां बहुगुणान्विताः॥ ९॥
ब्राह्मणावसथाश्चैव कर्तव्याः शतशः शुभाः।
भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनिष्ठिताः॥ १०॥
वाजिवारणशालाश्च तथा शय्यागृहाणि च।
भटानां महदावासा वैदेशिकनिवासिनाम्॥ ११॥
तथा पौरजनस्यापि कर्तव्या बहुविस्तराः।
आवासा बहुभक्ष्यान्नाः सर्वकामैरुपस्थिताः॥ १२॥
तथा जानपदं चैव कर्तव्यं बहुभोजनम्।
दातव्यमन्नं विविधं सत्कृत्य न तु पीडया॥ १३॥
सर्वे वर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः।
नापमानः प्रयोक्तव्यः कामक्रोधकृतः क्वचित्॥ १४॥
यज्ञकर्मसु ये चान्याः पुरुषाः शिल्पिनस्तथा।
तेषामपि विशेषेण पूजा कार्या यथाक्रमम्॥ १५॥
यथा सर्वं सुविहितं न किंचित्परिहीयते।
तथा भवन्तः कुर्वन्तु प्रीतिस्निग्धेन चेतसा॥ १६॥
ततः सर्वे समागम्य वसिष्ठमिदमब्रुवन्।
यथोक्तं तत्करिष्यामो न किंचित्परिहास्यते॥ १७॥
ततः सुमन्त्रमाहूय वसिष्ठो वाक्यमब्रवीत्।
निमन्त्रयस्व नृपतीन्पृथिव्यां ये च धार्मिकाः॥ १८॥
ब्राह्मणान्क्षत्रियान्वैश्याञ्छूद्रांश्चैव सहस्रशः।
समानयस्व सत्कृत्य सर्वदेशेषु मानवान्॥ १९॥
मिथिलाधिपतिं शूरं जनकं दृढविक्रमम्।
निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम्॥ २०॥
तमानय महाभागं स्वयमेव सुसत्कृतम्।
पूर्वं संबन्धकं ज्ञात्वा ततो वाक्यं ब्रवीमि ते॥ २१॥

तथा काशीपतिं स्निग्धं सततं प्रियवादिनम् ।
वयस्यं राजसिंहस्य तमानय यशस्विनम् ॥ २२ ॥
तथा केकयराजानं वृद्धं परमधार्मिकम् ।
श्वशुरं राजसिंहस्य सपुत्रं त्वमिहानय ॥ २३ ॥
अङ्गेश्वरं च राजानं लोमपादं सुसत्कृतम् ।
सुव्रतं देवसंकाशं स्वयमेवानयस्व ह ॥ २४ ॥
प्राच्यांश्च सिन्धुसौवीरान्सौराष्ट्रेयांश्च पार्थिवान् ।
दाक्षिणात्यान्नरेन्द्रांश्च सर्वानानय मा चिरम् ॥ २५ ॥
सन्ति स्निग्धाश्च येऽन्येऽपि राजानः पृथिवीतले ।
तानिहानय वै क्षिप्रं सानुगान्सहबान्धवान् ॥ २६ ॥
वसिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्वरितस्तदा ।
व्यादिशत्पुरुषांस्तत्र राज्ञामानयने बहून् ॥ २७ ॥
स्वयमेव हि धर्मात्मा प्रययौ मुनिशासनात् ।
सुमन्त्रः प्रयतो भूत्वा समानेतुं महीक्षितः ॥ २८ ॥
ततः कर्मान्तिकाः सर्वे वसिष्ठाय महर्षये ।
सर्वं निवेदयन्ति स्म यज्ञे यदुपकल्पितम् ॥ २९ ॥
ततः प्रीतो द्विजश्रेष्ठस्तान्सर्वान्पुनरब्रवीत् ।
भवद्भिर्न यथा यज्ञे परिहीयेत किंचन ॥ ३० ॥
नावज्ञया प्रदातव्यं किंचिद्वा केनचित्क्वचित् ।
अवज्ञया हि यद्दत्तं दातुस्तद्दोषमावहेत् ॥ ३१ ॥
ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः ।
बहूनि रत्नान्यादाय राज्ञो दशरथस्य ह ॥ ३२ ॥
ततो वसिष्ठः सुप्रीतो राजानमिदमब्रवीत् ।
उपयाता नरव्याघ्र राजानस्तव शासनात् ॥ ३३ ॥
मयापि सत्कृताः सर्वे यथार्हं पूजिताश्च ते ।
यज्ञावत्संभृतं सर्वं पुरुषैः सुसमाहितैः ॥ ३४ ॥
निर्यातु च भवान्यष्टुं यज्ञायतनमन्तिकम् ।
सर्वकामैरुपहृतैरुपेतं वै समन्ततः ॥ ३५ ॥

तदा वसिष्ठवचनादृष्यशृङ्गस्य चोभयोः ।
दिवसे शुभनक्षत्रे निर्यातो जगतीपतिः ॥ ३६ ॥
ततो वसिष्ठप्रमुखाः सर्व एव द्विजातयः ।
अश्वमेधं पुरस्कृत्य कर्माण्यारेभिरे तदा ॥ ३७ ॥

इति बालकाण्डे यज्ञारम्भो नाम द्वादशः सर्गः ॥ १२ ॥

---

अथ संवत्सरे पूर्णे प्राप्ते तस्मिंस्तुरंगमे ।
सरय्वा उत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ १ ॥
ऋष्यशृङ्गं पुरस्कृत्य कर्म चक्रुर्द्विजर्षभाः ।
अश्वमेधे महायज्ञे राज्ञस्तस्य महात्मनः ॥ २ ॥
कर्म कुर्वन्ति विधिवद्याजका वेदपारगाः ।
यथाविधि यथान्यायं परिक्रामन्ति शास्त्रत. ॥ ३ ॥
प्रवर्ग्यं शास्त्रतः कृत्वा तथैवोपसदं द्विजाः ।
चक्रुश्च विधिवत्सर्वं तथैवोद्वास्यकर्म ते ॥ ४ ॥
अभिपूज्य ततो हृष्टाः सर्वे चक्रुर्यथाविधि ।
प्रातःसवनपूर्वाणि कर्माणि मुनिपुङ्गवाः ॥ ५ ॥
ऐन्द्रश्च विधिवद्दत्तो राजा चाभिषुतोऽनघः ।
माध्यंदिनं च सवनं प्रावर्तत यथाक्रमम् ॥ ६ ॥
तृतीयं सवनं चैव राज्ञोऽस्य सुमहात्मनः ।
चक्रुस्ते शास्त्रतो दृष्ट्वा तथा ब्राह्मणपुङ्गवाः ॥ ७ ॥
आह्वयांचक्रिरे तत्र शक्रादीन्विबुधोत्तमान् ।
ऋष्यशृङ्गादयो मन्त्रैः शिक्षाक्षरसमन्वितैः ॥ ८ ॥
गीतिभिर्मधुरैः स्निग्धैर्मन्त्राह्वानैर्यथार्हतः ।
होतारो ददुरावाह्य हविर्भागान्दिवौकसाम् ॥ ९ ॥
नानाहुतमभूत्तत्र स्खलितं वापि किंचन ।
दृश्यते ब्रह्मवत्सर्वं क्षेमयुक्तं हि चक्रिरे ॥ १० ॥
न तेष्वहःसु श्रान्तो वा क्षुधितो वापि दृश्यते ।
तिर्यक्स्वापि कुतोऽन्येषु भूतेष्वपरितर्पितम् ॥ ११ ॥

अनाथानां तथा स्त्रीणां बालवृद्धस्य चैव हि ।
बुभुक्षितानां दीनानां नातृप्तिरुपलभ्यते ॥ १२ ॥
तापसा भुञ्जते नित्यं भुञ्जते श्रमणा अपि ।
व्यश्रूयत च शब्दोयं दीयतां भुज्यतामिति ॥ १३ ॥
दीयतां दीयतामन्नं वासांसि विविधानि च ।
इति संचोदितास्तत्र तथा चक्रुरतन्द्रिताः ॥ १४ ॥
अन्नकूटाश्च दृश्यन्ते बहवः पर्वतोपमाः ।
दिवसे दिवसे कृप्ता व्यञ्जनानां ह्रदास्तथा ॥ १५ ॥
नानादेशादनुप्राप्ताः पुरुषाः स्त्रीगणास्तथा ।
अन्नपानैः सुविहितास्तस्मिन्यज्ञे महात्मनः ॥ १६ ॥
ब्राह्मणानां सहस्राणि तानि तत्र महामखे ।
पृथग्बुभुजिरेऽन्नानि स्वादूनी विविधानि च ॥ १७ ॥
रुक्मपात्रीष्वनेकासु राजतीषु च सर्वशः ।
द्विजातयोऽन्नपानानि तत्राभुञ्जत चासकृत् ॥ १८ ॥
स्वलंकृताश्च पुरुषा ब्राह्मणान्पर्यवेषयन् ।
सुप्रीतमनसः सर्वे सुमृष्टमणिकुण्डलाः ॥ १९ ॥
अन्नं हि विधिवत्स्वादु प्रशंसन्ति द्विजर्षभाः ।
अहो तृप्ताः स्म भद्रं ते इति शुश्राव राघवः ॥ २० ॥
कर्मान्तरे तदा विप्रा हेतुवादान्बहूनपि ।
प्राहुः सुवाग्मिनो धीराः परस्परजिगीषवः ॥ २१ ॥
दिवसे दिवसे तत्र संस्तरे कुशला द्विजाः ।
सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः ॥ २२ ॥
नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः ।
सदस्यस्तस्य वै राज्ञो नावादकुशलो द्विजः ॥ २३ ॥
प्राप्ते यूपोच्छ्रये तस्मिन्षड्बैल्वाः खादिराश्च षट् ।
तावन्त एव पालाशास्तथैवौदुम्बराः पृथक् ॥ २४ ॥
श्लेष्मातकमयश्चैको देवदारुमयस्तथा ।
द्वावास्तां तत्र विहितौ बाहुभ्यामपरिग्रहौ ॥ २५ ॥

कारिताः सर्वे एवैते शास्त्रज्ञैर्यज्ञकोविदैः ।
शोभार्थं तस्य यज्ञस्य काञ्चनालङ्कृता भवन् ॥ २६ ॥
एकविंशतियूपास्ते एकविंशत्यरत्नयः ।
वासोभिरेकविंशद्भिरेकैकं समलंकृताः ॥ २७ ॥
विन्यस्ता विधिवत्सर्वे शिल्पिभिः सुदृढाः कृताः ।
अष्टाश्रयः सर्वे एव श्लक्ष्णरूपसमन्विताः ॥ २८ ॥
आच्छादितास्ते वासोभिः पुष्पैर्गन्धैश्च पूजिताः ।
सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥ २९ ॥
स चैत्यो राजसिंहस्य संचितः कुशलैर्द्विजैः ।
गरुडो रुक्मपक्षो वै त्रिगुणोऽष्टादशात्मकः ॥ ३० ॥
नियुक्तास्तत्र पशवस्तास्ता उद्दिश्य देवताः ।
जलचराः स्थलचरा अन्तरिक्षचरास्तथा ॥ ३१ ॥
पतङ्गाः पक्षिणश्चैव तथा वनचराश्च ये ।
नानासरीसृपाश्चैव नानौषध्यः प्रकल्पिताः ।
ऋषभाः सर्वे एवेति नियुक्ताः शास्त्रतस्तथा ॥ ३२ ॥
पशूनां त्रिशतं त्वासीद्यूपेषु नियतं तदा ।
अश्वरत्नं च तत्रैव प्रोक्षितं वैश्वदेविकम् ॥ ३३ ॥
कौशल्या तं हयं तत्र परिगम्य प्रदक्षिणम् ।
सम्यगभ्यर्चयांचक्रे गन्धमाल्यविभूषणैः ।
विषाणैर्विशशासैनं त्रिभिः परमया मुदा ॥ ३४ ॥
पतत्रिणा तदा सार्धं सुस्थितेन च चेतसा ।
अवसद्रजनीमेकां कौशल्या पुत्रकाम्यया ॥ ३५ ॥
होताध्वर्युस्तथोद्गाता हयेन समयोजयन् ।
महिष्याः परिवृत्त्यर्थमुपोढामपरां तथा ॥ ३६ ॥
तमश्वमुपतिष्ठन्त्याः कौशल्यायास्तदा द्विजाः ।
ऋष्यशृङ्गादयः प्रीताः प्रायुञ्जन्त तदाशिषः ॥ ३७ ॥
पतत्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रियः ।
ऋत्विक्परमसंपन्नः श्रपयामास शास्त्रतः ॥ ३८ ॥

धूमगन्धं वपायास्तु जिघ्रति स्म नराधिपः ।
यथाकालं यथान्यायं निर्णुदन् पापमात्मनः ॥ ३९ ॥
हयस्य यानि चाङ्गानि कल्पितानि विभागशः ।
अग्नौ प्रास्यन्ति विधिवत्समस्ताः षोडशर्त्विजः ॥ ४० ॥
प्लक्षशाखासु यज्ञानामन्येषां क्रियते हविः ।
अश्वमेधस्य चैकस्य वैतसो भाग इष्यते ॥ ४१ ॥
त्र्यहोऽश्वमेधः संख्यातः कल्पसूत्रेण ब्राह्मणैः ।
चतुष्टोममहस्तस्य प्रथमं परिकल्पितम् ॥ ४२ ॥
उक्थ्यं द्वितीयं संख्यातमतिरात्रं तथोत्तरम् ।
विचारास्तत्र बहवो विहिताः शास्त्रदर्शनात् ॥ ४३ ॥
ज्योतिष्टोमायुषी चैव अतिरात्रे विनिर्मिते ।
अभिजिद्विश्वजिच्चैवमप्तोर्यामो महाक्रतुः ॥ ४४ ॥
क्रतुं समाप्य तु तदा न्यायतः पुरुषर्षभः ।
ऋत्विग्भ्यः प्रददौ राजा धरां तां कुलवर्धनः ॥ ४५ ॥
प्राचीं होत्रे ददौ स्फीतां दिशं बाहुबलार्जिताम् ।
अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् ॥ ४६ ॥
उद्गात्रे च तथोदीचीं दक्षिणैषा विनिर्मिता ।
अश्वमेधे महायज्ञे स्वयंभूविहिते पुरा ॥ ४७ ॥
एवं दत्त्वा प्रहृष्टोऽभूच्छ्रीमानिक्ष्वाकुनन्दनः ।
ऋत्विजस्त्वब्रुवन्सर्वे राजानं गतकल्मषम् ॥ ४८ ॥
भवानेव महीं कृत्स्नामेको रक्षितुमर्हति ।
न भूम्या कार्यमस्माकं न हि शक्ताः स्म पालने ॥ ४९ ॥
रताः स्वाध्यायकरणे वयं नित्यं हि भूमिप ।
निष्क्रयं किंचिदेवेह प्रयच्छतु भवानिति ॥ ५० ॥
गवां शतसहस्राणि दश तेभ्यो ददौ नृपः ।
दश कोटीः सुवर्णस्य रजतस्य चतुर्गुणम् ॥ ५१ ॥
ऋत्विजस्तु ततः सर्वे प्रददुः सहिता वसु ।
ऋष्यशृङ्गाय मुनये वसिष्ठाय च धीमते ॥ ५२ ॥

दक्षिणाः परिगृह्याथ सुप्रीतमनसा द्विजाः ।
ऊचुर्दशरथं तत्र कामं ध्यायेति वै तदा ॥ ९३ ॥
ततोब्रवीदृष्यशृङ्गं राजा दशरथस्तदा ।
कुलस्य वर्धनं तत्तु कर्तुमर्हसि सुव्रत ॥ ९४ ॥
तथेति स च राजानमुवाच द्विजसत्तमः ।
भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्वहाः ॥ ९५ ॥

इति बालकाण्डे अश्वमेधसमाप्तिर्नाम त्रयोदशः सर्गः ॥ १३ ॥

---

मेधावी तु ततो ध्यात्वा स किंचिदिदमुत्तरम् ।
लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत् ॥ १ ॥
इष्टिं तेन्यां करिष्यामि पुत्रीयां पुत्रकारणात् ।
अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ॥ २ ॥
ततः प्रचक्रमे कर्तुमिष्टिं कामसमृद्धये ।
तस्य राज्ञो हितान्वेषी विभाण्डकसुतो वशी ॥ ३ ॥
तत्र देवाः सगन्धर्वाः सिद्धाश्च मुनिभिः सह ।
भागप्रतिग्रहार्थं वै पूर्वमेव समागताः ॥ ४ ॥
ब्रह्मा सुरेश्वरः स्थाणुस्तथा नारायणः प्रभुः ।
इन्द्रश्च भगवान्साक्षान्मरुद्गणवृतस्तथा ॥ ५ ॥
अश्वमेधे महायज्ञे राज्ञस्तस्य महात्मनः ।
तत्र भागार्थिनो देवानागतान्सोभ्ययाचत ॥ ६ ॥
अयं राजा दशरथः पुत्रार्थी तप्तवांस्तपः ।
इष्टवानश्वमेधेन भवतः श्रद्धयान्वितः ॥ ७ ॥
इष्टिं च पुत्रकामोन्यां पुनः कर्तुं समुद्यतः ।
तदस्य पुत्रकामस्य प्रसादं कर्तुमर्हथ ॥ ८ ॥
अभियाचे च वः सर्वानस्यार्थेहं कृताञ्जलिः ।
भवेयुरस्य चत्वारः पुत्रास्त्रैलोक्यविश्रुताः ॥ ९ ॥
ते तथेत्यब्रुवन्देवा ऋषिपुत्रं कृताञ्जलिम् ।
माननीयोसि नो विप्र राजा चैव विशेषतः ॥ १० ॥

प्राप्स्यते परमं काममेतयेष्ट्या नराधिपः ।
इत्युक्त्वान्तर्हिता देवास्ततः शक्रपुरोगमाः ॥ ११ ॥
ताः समेत्य यथान्यायं तस्मिन्सदसि देवताः ।
अब्रुवँल्लोककर्तारं ब्रह्माणं वचनं ततः ॥ १२ ॥
त्वत्प्रदिष्टवरो ब्रह्मन्रावणो नाम राक्षसः ।
सर्वान्नो बाधते दर्पान्महर्षींश्च तपोरतान् ॥ १३ ॥
त्वया ह्यस्य वरो दत्तः प्रीतेन भगवन्पुरा ।
देवदानवयक्षाणामवध्योसीति कामतः ॥ १४ ॥
मानयन्तश्च ते वाक्यं सर्वमस्य सहामहे ।
स बाधयति लोकांस्त्रीन्विहिंसन्राक्षसेश्वरः ॥ १५ ॥
देवर्षियक्षगन्धर्वानसुरान्मानवांश्च सः ।
अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥ १६ ॥
न तत्र सूर्यस्तपति न भयाद्वाति मारुतः ।
नाग्निर्ज्वलति वै तत्र यत्र तिष्ठति रावणः ॥ १७ ॥
चलोर्मिमाली तं दृष्ट्वा समुद्रोपि न कम्पते ।
नष्टो वैश्रवणः स्थानात्तस्य वीर्येण पीडितः ॥ १८ ॥
तन्महन्नो भयं तस्माद्राक्षसाद्घोरदर्शनात् ।
वधार्थं तस्य भगवन्नुपायं कर्तुमर्हसि ॥ १९ ॥
एवमुक्तः सुरैः सर्वैश्चिन्तयित्वा ततोब्रवीत् ।
हन्तायं विहितस्तस्य वधोपायो दुरात्मनः ॥ २० ॥
तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् ।
अवध्यः स्यामिति प्रोक्तं तथेत्युक्तं च तन्मया ॥ २१ ॥
अवज्ञाय तु तद्रक्षो मानुषान्नान्वकीर्तयत् ।
तस्मात्स मानुषाद्वध्यो मृत्युर्नान्योस्य विद्यते ॥ २२ ॥
एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् ।
देवाः शक्रपुरोगास्ते हर्षिताः सर्वतोभवन् ॥ २३ ॥
एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः ।
शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥ २४ ॥

वैनतेयं समारुह्य भास्करस्तोयदं यथा ।
तप्तहाटककेयूरो वन्द्यमानः सुरोत्तमैः ॥ २५ ॥
तमब्रुवन्सुराः सर्वे समभिष्टुत्य संनताः ।
आर्तानामसि लोकानामार्तिहा मधुसूदन ॥ २६ ॥
याचामहेतस्त्वामार्ताः शरणं नो भवाच्युत ।
ब्रूत किं करवाणीति विष्णुस्तानब्रवीद्वचः ॥ २७ ॥
इति तस्य वचः श्रुत्वा पुनरूचुरिदं सुराः ।
राजा दशरथो नाम तप्तवान्सुमहत्तपः ॥ २८ ॥
इष्टवांश्चाश्वमेधेन प्रजाकामः स चाप्रजाः ।
अस्मन्नियोगात्त्वं विष्णो तस्य पुत्रत्वमाप्नुहि ॥ २९ ॥
तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ।
विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् ॥ ३० ॥
तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् ।
अवध्यं दैवतैर्विष्णो समरे जहि रावणम् ॥ ३१ ॥
स हि देवान्सगन्धर्वान्सिद्धांश्च ऋषिसत्तमान् ।
राक्षसो रावणो मूर्खो वीर्योत्सेकेन बाधते ॥ ३२ ॥
ऋषयश्च ततस्तेन गन्धर्वाप्सरसस्तथा ।
क्रीडन्तो नन्दनवने रौद्रेण विनिपातिताः ॥ ३३ ॥
त्वं गतिः परमा देव सर्वेषां नः परंतप ।
वधाय देवशत्रूणां नृणां लोके मनः कुरु ॥ ३४ ॥
स नियुक्तस्तथा देवैः साक्षान्नारायणः प्रभुः ।
तानुवाच ततो देवानिदं वचनमर्थवत् ॥ ३५ ॥
किं मया तत्र कर्तव्यं प्रादुर्भूतेन वः सुराः ।
कार्यं कुतो वापि भयं युष्माकमिदमीदृशम् ॥ ३६ ॥
इति तस्य वचः श्रुत्वा विष्णोरूचुरिदं सुराः ।
राक्षसान्नो भयं विष्णो रावणाल्लोकरावणात् ॥ ३७ ॥
मानुषीं तनुमास्थाय समुद्धर्तुं त्वमर्हसि ।
त्वत्तो हि नान्यस्तं पापं शक्तो हन्तुं दिवौकसाम् ॥ ३८ ॥

स दीर्घं तप्तवान्कालं तपोत्युग्रमरिंदम ।
तेनायं परितुष्टोस्य बभूव प्रपितामहः ॥ ३९ ॥
ततोस्मै प्रददौ तुष्टो वरदो भगवान्पुरा ।
अभयं सर्वभूतेभ्यो वर्जयित्वा तु मानुषान् ॥ ४० ॥
ततो दत्तवरस्यैवं तस्य नान्यत्र मानुषात् ।
वधाद्भयमतश्चैनं गत्वा मानुषतां जहि ॥ ४१ ॥
एवमुक्तस्तु देवेशो विष्णुस्त्रिदशपुंगवः ।
पितामहपुरोगांस्तान्सर्वलोकनमस्कृतः ।
अब्रवीत्त्रिदशान्सर्वान्समेतान्धर्मसंस्थितान् ॥ ४२ ॥
भयं त्यजत भद्रं वो हितार्थं युधि रावणम् ।
सपुत्रपौत्रं सामात्यं समन्त्रिज्ञातिबान्धवम् ।
हत्वा क्रूरं दुराधर्षं देवर्षीणां भयावहम् ॥ ४३ ॥
दश वर्षसहस्राणि दश वर्षशतानि च ।
वत्स्यामि मानुषे लोके पालयन्पृथिवीमिमाम् ॥ ४४ ॥
ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः ।
स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥ ४५ ॥
तमुद्धतं रावणमुग्रतेजसं
प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् ।
विरावणं साधुतपस्विकण्टकं
मनुष्यतामेत्य निहन्तुमर्हसि ॥ ४६ ॥

इति बालकाण्डे रावणवधोपायो नाम चतुर्दशः सर्गः ॥ १४ ॥

---

एवं दत्त्वा वरं देवो देवानां विष्णुरात्मवान् ।
मानुषे चिन्तयामास जन्मभूमिमथात्मनः ॥ १ ॥
ततः पद्मपलाशाक्षः कृत्वात्मानं चतुर्विधम् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥ २ ॥
स चाप्यपुत्रो नृपतिस्तस्मिन्काले महाद्युतिः ।
अयजत्पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ॥ ३ ॥

स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् ।
अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः ॥ ४ ॥
तत्रास्य यजमानस्य पावकादतुलप्रभम् ।
प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ ५ ॥
कृष्णं रक्ताम्बरधरं रक्तास्यं दुन्दुभिस्वनम् ।
स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ ६ ॥
शुभलक्षणसंपन्नं दिव्याभरणभूषितम् ।
शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम् ।
दिव्याकारसमाकारं दीप्तानलशिखोपमम् ॥ ७ ॥
तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ।
दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियाम् ।
प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥ ८ ॥
समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् ।
प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥ ९ ॥
सान्तःपुरस्तदा राजा प्रत्युवाच कृताञ्जलिः ।
भगवन्स्वागतं तेऽस्तु किमहं करवाणि ते ॥ १० ॥
अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् ।
राजन्नर्चयता देवानद्य प्राप्तं त्वया फलम् ॥ ११ ॥
इदं तु नृपशार्दूल पायसं देवनिर्मितम् ।
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ १२ ॥
भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै ।
तासु त्वं लप्स्यसे पुत्रान्यदर्थं यजसे नृप ॥ १३ ॥
बाढमित्येव नृपतिः शिरसा प्रतिगृह्य ताम् ।
पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ १४ ॥
अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम् ।
मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ १५ ॥
ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् ।
संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ १६ ॥

ततो दशरथः प्राप्य पायसं देवनिर्मितम् ।
बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ १७ ॥
हर्षरश्मिभिरुद्योतं तस्यान्तःपुरमाबभौ ।
शारदस्याभिरामस्य चन्द्रस्येव नभोंशुभिः ॥ १८ ॥
सोन्तःपुरं प्रविश्यैव कौशल्यामिदमब्रवीत् ।
पायसं प्रतिगृह्णीष्व पुत्रीयं त्विदमात्मनः ॥ १९ ॥
कौशल्यायै नरपतिः पायसार्धं ददौ तदा ।
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ।
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ॥ २० ॥
प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ।
अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ।
एवं तासां ददौ राजा भार्याणां पायसं पृथक् । ॥ २१ ॥
ताश्चैव पायसं प्राप्य नरेन्द्रस्योत्तमाः स्त्रियः ।
संतानं मेनिरे सर्वाः महर्षोदितचेतसः ॥ २२ ॥
ततो हविः प्राश्य तदुत्तमं स्त्रियः।
स्वयं नृपेण प्रतिपादितं मुदा ।
हुताशनादित्यसमानतेजसः
क्रमेण गर्भानुपलेभिरे शुभान् ॥ २३ ॥
ततः स राजा प्रतिवीक्ष्य ताः स्त्रियः
प्ररूढगर्भाः परितुष्टमानसः ।
बभूव हृष्टस्त्रिदिवे यथा हरिः ।
सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥ २४ ॥

इति बालकाण्डे पायसोत्पत्तिर्नाम पञ्चदशः सर्गः ॥ १५ ॥

---

पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः ।
उवाच देवानाहूय स्वयंभूर्भगवानिदम् ॥ १ ॥
सत्यसंधस्य वीरस्य सर्वेषां नो हितैषिणः ।
विष्णोः सहायान्समरे सृजध्वं कामरूपिणः ॥ २ ॥

मायाविदश्च शूराश्च वायुवेगसमाञ्जवे ।
नयज्ञान्बुद्धिसपन्नान्विष्णुतुल्यपराक्रमान् ॥ ३ ॥
असहार्यानुपायज्ञान्दिव्यसहननान्वितान् ।
सर्वास्त्रगुणसपन्नानमृतप्राशनानिव ॥ ४ ॥
अप्सर सु च मुख्यासु गन्धर्वीणा तनूषु च ।
यक्षपन्नगकन्यासु तथा विद्याधरीषु च ॥ ५ ॥
किंनरीणा च गात्रेषु वानरीणा तनूषु च ।
सृजध्व हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ॥ ६ ॥
पूर्वमेव मया सृष्टो जाम्बवानृक्षपुगव ।
जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥ ७ ॥
ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ।
जनयामासुरेव ते पुत्रान्वानररूपिण ॥ ८ ॥
देवा महर्षिगन्धर्वास्तार्क्ष्या यक्षा यशस्विन ।
चारणाश्च सुतान्वीरान्ससृजुर्वनचारिण ॥ ९ ॥
नागा किंपुरुषाश्चैव सिद्धविद्याधरोरगा ।
बहवो जनयामासुर्हृष्टास्तत्र सहस्रश ॥ १० ॥
वानरेन्द्र महेन्द्राभमिन्द्रो वालिनमात्मजम् ।
सुग्रीव जनयामास तपनस्तपता वर ॥ ११ ॥
बृहस्पतिस्त्वजनयत्तार नाम महाकपिम् ।
सर्ववानरमुख्याना बुद्धिमन्तमनुत्तमम् ॥ १२ ॥
धनदस्य सुत श्रीमान्वानरो गन्धमादन ।
विश्वकर्मा त्वजनयन्नल नाम महाकपिम् ॥ १३ ॥
पावकस्य सुत श्रीमान्नीलोऽग्निसदृशप्रभ ।
तेजसा यशसा वीर्यादत्यरिच्यत पावकम् ॥ १४ ॥
रूपद्रविणसपन्नावश्विनौ रूपसमतौ ।
मैन्द च द्विविद चैव जनयामासतु स्वयम् ॥ १५ ॥
वरुणो जनयामास सुषेण नाम वानरम् ।
शरभ जनयामास पर्जन्यस्तु महाबल ॥ १६ ॥

मारुतस्यौरसः श्रीमान्हनुमान्नाम वानरः ।
वज्रसंहननोपेतो वैनतेयसमो जवे ॥ १७ ॥
ते सृष्टा बहुसाहस्रा दशग्रीववधेप्सुभिः ।
अप्रमेयबला वीरा वानराः कामरूपिणः ॥ १८ ॥
ते गजाचलसंकाशाः सिंहसंहननौजसः ।
ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभिजज्ञिरे ॥ १९ ॥
यस्य देवस्य यद्रूपं यद्बलं यः पराक्रमः ।
तस्य तत्यैव सदृशः स स पुत्रो व्यजायत ॥ २० ॥
गोलाङ्गूलीषु चोत्पन्नाः केचिदुन्नतविक्रमाः ।
ऋक्षीषु च तथा जाता वानराः किंनरीषु च ॥ २१ ॥
शिलाप्रहरणाः सर्वे सर्वे पादपयोधिनः ।
नखदंष्ट्रायुधाः सर्वे सर्वे सर्वास्त्रकोविदाः ॥ २२ ॥
वेचालयेयुः शैलेन्द्रान्भेदयेयुः स्थिरान्द्रुमान् ।
क्षोभयेयुश्च वेगेन समुद्रं सरितां पतिम् ॥ २३ ॥
दारयेयुः क्षितिं पद्भ्यामाप्लवेयुर्महार्णवान् ।
नभस्तलं विशेयुश्च गृह्णीयुरपि तोयदान् ॥ २४ ॥
गृह्णीयुरपि मातङ्गान्मत्तान्प्रव्रजतो वने ।
नर्दमानाश्च नादेन पातयेयुर्विहंगमान् ॥ २५ ॥
ईदृशानां प्रसूतानि हरीणां कामरूपिणाम् ।
शतं शतसहस्राणि यूथपानां महात्मनाम् ॥ २६ ॥
ते प्रधानाः प्रधानेषु यूथेषु हरियूथपाः ।
बभूवुर्यूथपश्रेष्ठा वीरांश्चाजनयन्हरीन् ॥ २७ ॥
ऋक्षराजं तु तत्रान्ये उपतस्थुर्वनौकसः ।
अतो नानाविधाञ्छैलान्काननानि च भेजिरे ॥ २८ ॥
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ।
भ्रातरावुपतस्थुस्ते सर्व एव हरीश्वराः ॥ २९ ॥
ते तार्क्ष्यबलसंपन्नाः सर्वे युद्धविशारदाः ।
विचरन्तोऽर्दयन्दर्पात्सिंहव्याघ्रमहोरगान् ॥ ३० ॥

तांश्च सर्वान्महाबाहुर्वाली विपुलविक्रमः ।
जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ॥ ३१ ॥
तैरियं पृथिवी शूरैः सपर्वतवनार्णवा ।
कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः ॥ ३२ ॥
तैर्मेघवृन्दाचलतुल्यकायै-
र्महाबलैर्वानरयूथपालैः ।
बभूव भूर्भीमशरीररूपैः
समावृता रामसहायहेतोः ॥ ३३ ॥

इति बालकाण्डे वानरोत्पत्तिर्नाम षोडशः सर्गः ॥ १६ ॥

---

समाप्ते तु क्रतौ तस्मिन्वाजिमेधे महात्मनः ।
हविर्भागानवाप्येष्टाञ्जग्मुर्देवा यथागतम् ॥ १ ॥
ऋषयश्च महात्मानः प्रतिजग्मुः सुपूजिताः ।
राजानश्चैव ये तत्र क्रतावासन्समागताः ॥ २ ॥
तदार्मीताननुज्ञातुं सर्वानेव प्रचक्रमे ।
प्रीतियुक्तेन मनसा राजा दशरथस्तदा ॥ ३ ॥
स्वं स्वं राष्ट्रं यथाकामं गच्छन्तु मनुजाधिपाः ।
प्रीतोऽहमस्मि भद्रं वः स्वस्ति प्राप्नुत मा चिरम् ॥ ४ ॥
सर्वे भवन्तः पश्यन्तु कार्यं विषयरक्षणम् ।
भ्रष्टो हि विषयाद्राजा मृतकल्पः प्रदृश्यते ॥ ५ ॥
तस्मात्स्वविषये रक्षा कर्तव्या भूतिमिच्छता ।
यज्ञैर्नावाप्यते स्वर्गो रक्षणात्प्राप्यते यथा ॥ ६ ॥
यथा हि पुरुषः कुर्याच्छरीरे यत्नमुत्तमम् ।
वसनाद्यैरुपायैस्तु तथा राज्ये नराधिपः ॥ ७ ॥
अनागतविधानं च कर्तव्यं विषये नृपैः ।
आगमश्चापि कर्तव्यो यथा दोषो न जायते ॥ ८ ॥
एवं समादिशद्राज्ञो राजा श्रुत्वा च तन्नृपाः ।
अन्योन्यं संविदं कृत्वा प्रयाताः सर्वतो दिशः ॥ ९ ॥

समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।
संप्रहृष्टमना भूत्वा राजा दशरथस्तदा ॥ १० ॥
गतेषु पार्थिवेन्द्रेषु सभृत्यबलवाहनः ।
प्रविवेश पुरीं श्रीमान्पुरस्कृत्य द्विजोत्तमान् ॥ ११ ॥
ततः कालस्य महत ऋष्यशृङ्गः सुपूजितः ।
प्रययौ शान्तया सार्धं ब्राह्मणैश्च कृतात्मभिः ॥ १२ ॥
अन्वीयमानो राज्ञा वै सानुयात्रेण धीमता ।
वसिष्ठेन च धीरेण तथा पौरजनेन च ॥ १३ ॥
यानेन महता शान्ता कम्बलावततेन च ।
गोभिः श्वेतैः प्रयुक्तेन प्रेष्यवर्गान्वितेन च ॥ १४ ॥
संगृह्य धनं सुबहु मणिरत्नमजाविकम् ।
विविधैश्चाप्यलंकारैर्भूषिता श्रीरिवापरा ॥ १५ ॥
मुदा परमयोपेता प्रययौ वरवर्णिनी ।
भर्तारमनुसंरक्ता पौलोमीव पुरंदरम् ॥ १६ ॥
उषित्वा सुखवासं सा सर्वकामैः सुपूजिता ।
मानिता ज्ञातिभिश्चापि तथा स्त्रीभिश्च सर्वशः ॥ १७ ॥
श्राविता वनवासं च भर्त्रा सा तु शुभानना ।
तमेव मन्यते साधु तथापि सुखिता सती ॥ १८ ॥
सान्तःपुरो नृपश्चापि सोऽन्वगच्छन्महाव्रतम् ।
ऋषिपुत्रं महाभागं शान्तां चैवात्मजां शुभाम् ॥ १९ ॥
ऋषिपुत्रस्य वचनात्ततो वासे प्रकल्पिते ।
सुखवासाः स्म गच्छन्ति सर्वकामैः सुपूजिताः ॥ २० ॥
ततोऽभिगम्य राजानमृषिपुत्रः प्रतापवान् ।
समनुज्ञापयामास निवर्ततु भवानिति ॥ २१ ॥
ऋषिपुत्रवचः श्रुत्वा राजा सान्तःपुरस्तदा ।
उच्चैः प्ररुदितस्तत्र वचनं चेदमब्रवीत् ॥ २२ ॥
कौशल्यां च सुमित्रां च कैकेयीं च यशस्विनीम् ।
सर्वाः सुदृष्टां कुरुत शान्तां दुर्लभदर्शनाम् ॥ २३ ॥

तत आलिङ्ग्य ताः सर्वाः शान्तां बाष्पाविलेक्षणाः ।
ऊचुः स्वस्त्ययनान्यस्य सभार्यस्य द्विजस्य ताः ॥ २४ ॥
वायुश्चाग्निश्च सोमश्च पृथिवी सरितो दिशः ।
वने रक्षन्तु सततं त्वां भर्तृव्रतचारिणीम् ॥ २५ ॥
श्वशुरः पूजनीयस्ते स हि मान्यो विशेषतः ।
पूजाभिरनुकूलाभिरग्निशुश्रूषणादिभिः ॥ २६ ॥
भर्ता च पूजनीयस्ते सर्वावस्थास्वनिन्दिते ।
प्रियवादेन रहसि भर्ता स्त्रीणां हि दैवतम् ॥ २७ ॥
प्रेषयिष्यति राजा तु कुशलार्थं तवानघे ।
ब्राह्मणान्नित्यशः पुत्रि मोत्सुका भूः कदाचन ॥ २८ ॥
एवं शान्तां समाश्वास्य मूर्ध्न्युपाघ्राय चासकृत् ।
न्यवर्तन्त ततः सर्वाः स्त्रियो राज्ञा प्रचोदिताः ॥ २९ ॥
प्रदक्षिणं द्विजश्रेष्ठं कृत्वा राजा स वीर्यवान् ।
व्यादिशत्सैनिकान्कांश्चिदृष्यशृङ्गाय धीमते ॥ ३० ॥
अभिवाद्य स राजानमुवाच द्विजसत्तमः ।
स्वस्ति तेऽस्तु महाराज धर्मेणाराधय प्रजाः ॥ ३१ ॥
एवमुक्त्वा स राजानं ययावृषिसुतस्तदा ।
तं यान्तमनुवव्राज स्थितो निश्चलचक्षुषा ॥ ३२ ॥
अदृश्यस्तु यदा विप्रस्तदा राजा न्यवर्तत ।
मनस्तस्मिन्समाधाय स्नेहभावसमन्वितः ॥ ३३ ॥
प्रविष्टः स्वपुरीं राजा नागरैश्चाभिनन्दितः ।
न्यवसत्तत्र मुदितः पुत्रजन्मप्रतीक्षकः ॥ ३४ ॥
ऋष्यशृङ्गोऽपि तेजस्वी प्रययौ क्रमशस्तदा ।
लोमपादस्य नगरीं चम्पां चम्पकमालिनीम् ॥ ३५ ॥
श्रुत्वैव लोमपादोऽपि तमायान्तमृषिं तदा ।
सब्राह्मणः सहामात्यः प्रत्युद्गम्य तमब्रवीत् ॥ ३६ ॥
स्वागतं ते द्विजश्रेष्ठ दिष्ट्यासि कुशली प्रभो ।
इहागतो महाभाग सभार्यः सपरिच्छदः ॥ ३७ ॥

पिता ते कुशली ब्रह्मन्प्राहिणोन्नित्यशश्च सः ।
कुशलार्थं तव विभो सभार्यस्य विशेषतः ॥ ३८ ॥
स्वलंकृतं च नगरं कारयामास बुद्धिमान् ।
पूजार्थमृष्यशृङ्गस्य राजा हृष्टेन चेतसा ॥ ३९ ॥
ऋष्यशृङ्गः प्रहृष्टस्तु सह राज्ञा पुरोत्तमम् ।
पुरोहितं पुरस्कृत्य पूजितः प्रविवेश ह ॥ ४० ॥
एवं स न्यवसत्तत्र द्विजपुत्रः प्रतापवान् ।
राज्ञा सान्तःपुरेणैव पूज्यमानो यथाक्रमम् ॥ ४१ ॥
इति बालकाण्डे ऋष्यशृङ्गप्रतिगमनं नाम सप्तदशः सर्गः ॥ १७ ॥

---

ऋष्यशृङ्गे तु संप्राप्ते राजा ब्राह्मणमब्रवीत् ।
ऋषेर्गच्छ समीपं त्वं निवेदय च सुव्रतम् ॥ १ ॥
आगतं परमोदारमृष्यशृङ्गं दुरासदम् ।
ऋषये सुव्रताय त्वं काश्यपायात्मसंभवम् ॥ २ ॥
अभिवाद्यैव शिरसा मत्कृते द्विजसत्तमम् ।
प्रसादय सुतार्थं मे समारब्धं यथात्मना ॥ ३ ॥
श्रुत्वैव राज्ञो वचनं तदा स द्विजसत्तमः ।
जगाम तत्र यत्रासौ वर्तते काश्यपात्मजः ॥ ४ ॥
प्रसाद्य च द्विजश्रेष्ठं शिरसाभिप्रणम्य च ।
अब्रवीत्प्रश्रितं वाक्यं राज्ञा यदभिचोदितम् ॥ ५ ॥
पुत्रस्ते समनुप्राप्तो यज्ञं कृत्वा महायशाः ।
राज्ञो दशरथस्यैष श्वशुरस्य महात्मनः ॥ ६ ॥
श्रुत्वा तु वचनं तस्य द्विजस्य सुमहायशाः ।
गमने मतिमांश्चक्रे पुत्रस्यालयने तदा ॥ ७ ॥
स हि शिष्यवृतस्तत्र प्रयातो द्विजसत्तमः ।
संपूज्यमानो धर्मात्मा ग्रामैर्घोषैश्च सर्वशः ॥ ८ ॥
भक्ष्यभोज्यमुपादाय नरास्तं समुपागमन् ।
ऊचुः प्रणम्य शिरसा किं मुने करवामहे ॥ ९ ॥

तानब्रवीत्स विप्रेन्द्रः सर्वानेव समागतान् ।
किमर्थं क्रियते पूजा श्रोतुमिच्छामि तत्त्वतः ॥ १० ॥
तत ऊचुर्महात्मानं संबंधी ते नराधिपः ।
तस्याज्ञा क्रियते ब्रह्मन्व्येतु ते मानसो ज्वरः ॥ ११ ॥
श्रुत्वा तेषां तु वचनं मनःप्रह्लादनं शुभम् ।
प्रसादमकरोद्राज्ञः सहामात्यपुरस्य सः ॥ १२ ॥
विभाण्डकवचः श्रुत्वा किंकरा हृष्टमानसाः ।
त्वरिता जग्मुराख्यातुं राज्ञः प्रियनिवेदिनः ॥ १३ ॥
तच्छ्रुत्वा वचनं तेषां प्रत्युद्गम्य नराधिपः ।
पुरोहितेन सहितः प्रगृह्यार्घ्यं समाद्रवत् ॥ १४ ॥
दृष्ट्वा तु मुनिशार्दूलं प्रणम्य च पुनः पुनः ।
अब्रवीद्राजशार्दूलो विभाण्डकमिदं वचः ।
अद्य मे सफलं जन्म दर्शनात्तव सुव्रत ॥ १५ ॥
तथेति च स राजानमुवाच द्विजसत्तमः ।
मा भूद्भयं ते राजेन्द्र प्रसन्नोस्मि तवानघ ॥ १६ ॥
ततः प्रहृष्टो नृपतिः पुरस्कृत्य द्विजोत्तमम् ।
प्राविशन्नगरीं श्रीमानर्चितः सर्वमङ्गलैः ॥ १७ ॥
अभिवाद्य पुनश्चैव न्यायतः प्रतिपूज्य च ।
तस्थुः प्राञ्जलयः सर्वे समासाद्य द्विजोत्तमम् ॥ १८ ॥
ततः शान्तां पुरस्कृत्य ताः स्त्रियः समलंकृताम् ।
न्यवेदयन्त विप्राय स्नुषेयं तव मानद ॥ १९ ॥
प्रतिगृह्य स तां शान्तां समालिङ्ग्य ह धर्मवित् ।
अङ्के निवेश्य तदा विस्मयं परमं गतः ॥ २० ॥
द्विजोत्सङ्गात्समुत्थाय साभिवाद्य तदा द्विजम् ।
आविशत्प्राञ्जलिर्भूत्वा श्वशुरस्य समीपतः ॥ २१ ॥
प्रायश्चित्तं च कृतवान्पुत्रस्य द्विजसत्तमः ।
महर्षिभिः पूज्यमानः ससुतश्च वनं ययौ ॥ २२ ॥
इति बालकाण्डे ऋष्यशृङ्गवनगमनं नामाष्टादशः सर्गः ॥ १८

ततो यज्ञे समाप्ते तु ऋतूनां षट्समत्ययुः ।
ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥ १ ॥
नक्षत्रे दितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ।
ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥ २ ॥
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ।
कौशल्याजनयद्रामं दिव्यलक्षणसंयुतम् ॥ ३ ॥
कौशल्या शुशुभे तेन पुत्रेणामिततेजसा ।
यथावरेण देवानामदितिर्वज्रपाणिना ॥ ४ ॥
भवाय स हि लोकानां रावणस्य वधाय च ।
विष्णोर्वीर्यार्धतो जज्ञे रामो राजीवलोचनः ॥ ५ ॥
भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ।
साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः ॥ ६ ॥
अथ लक्ष्मणशत्रुघ्नौ सुमित्राजनयत्सुतौ ।
दृढभक्ती महोत्साहौ विष्णोरर्धसमन्वितौ ॥ ७ ॥
पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ।
सार्पे जातौ तु सौमित्री कुलीरेऽभ्युदिते रवौ ॥ ८ ॥
राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् ।
गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः ॥ ९ ॥
जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खात्पतत् ॥ १० ॥
उत्सवश्च महानासीदयोध्यायां जनाकुलः ।
रथ्याश्च जनसंबाधा नटनर्तकसंकुलाः ॥ ११ ॥
गायनैश्च विराविण्यो वादनैश्च तथापरैः ।
विरेजुर्विपुलास्तत्र सर्वरत्नसमन्विताः ॥ १२ ॥
प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ।
ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ।
अतीत्यैकादशाहं तु नामकर्म तथाकरोत् ॥ १३ ॥
ज्येष्ठं रामं महात्मानं भरतं कैकेयीसुतम् ।

सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपरं तथा ।
वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥ १४ ॥
तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ।
बभूव भूयो भूतानां स्वयंभूरिव संमतः ॥ १५ ॥
सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ।
सर्वे ज्ञानोपसंपन्नाः सर्वे समुदिता गुणैः ॥ १६ ॥
तेषामपि महातेजा रामः सत्यपराक्रमः ।
इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ॥ १७ ॥
गजस्कन्धेश्वपृष्ठे च रथ्यचर्यासु संमतः ।
धनुर्वेदे च निरतः पितुः शुश्रूषणे रतः ॥ १८ ॥
बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ।
रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ॥ १९ ॥
सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ।
लक्ष्मणो लक्ष्मिसंपन्नो बहिःप्राण इवापरः ॥ २० ॥
न च तेन विना निद्रां लभते पुरुषोत्तमः ।
मिष्टमन्नमुपानीतमश्नाति न हि तं विना ॥ २१ ॥
यदा हि हयमारूढो मृगयां याति राघवः ।
अथैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ॥ २२ ॥
भरतस्यापि शत्रुघ्नो रामस्येव हि लक्ष्मणः ।
प्राणैः प्रियतरो भ्राता तस्यापि स तथाभवत् ॥ २३ ॥
ते ख्यातयशसः सर्वे परस्परहिते रताः ।
तुष्टिमुत्पादयांचक्रुः पितुर्विनयपौरुषैः ॥ २४ ॥
स चतुर्भिर्महाभागैः पुत्रैर्दशरथो नृपः ।
लोकपालैरिव बभौ वृतः साक्षात्प्रजापतिः ॥ २५ ॥

इति बालकाण्डे दशरथपुत्रजन्म नामैकोनविंशः सर्गः ॥ १९

---

अथ राजा दशरथस्तेषां दारक्रियां प्रति ।
चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ॥ १ ॥

एतस्मिन्नेव काले तु विश्वामित्र इति श्रुतः ।
महर्षिरभ्यगाद्द्रष्टुमयोध्यायां नराधिपम् ॥ २ ॥
तस्य यज्ञो हि रक्षोभिस्तदा विलुलुपे किल ।
मायावीर्यबलोन्मत्तैर्धर्मकामस्य धीमतः ॥ ३ ॥
रक्षार्थं तस्य यज्ञस्य द्रष्टुमैच्छत्स पार्थिवम् ।
न हि शक्नोत्यविघ्नेन समाप्तुं स मुनिः क्रतुम् ॥ ४ ॥
स राज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाच ह ।
राज्ञ आवेदयध्वं मां संप्राप्तं गाधिनः सुतम् ॥ ५ ॥
तस्य ते वचनं श्रुत्वा राज्ञो वेश्म प्रदुद्रुवुः ।
संभ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः ॥ ६ ॥
ते गत्वा राजभवनं विश्वामित्रं महामुनिम् ।
प्राप्तमावेदयामासुर्नृपाय प्रणताः स्थिताः ॥ ७ ॥
ततो राजा दशरथः सामात्यः सपुरोहितः ।
प्रत्युद्ययौ मुनिं द्रष्टुं ब्रह्माणमिव वासवः ॥ ८ ॥
स दृष्ट्वा ज्वलितं दीप्त्या तापसं शंसितव्रतम् ।
प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत् ॥ ९ ॥
स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ।
कुशलानामयं प्रीतः पप्रच्छ वसुधाधिपम् ॥ १० ॥
पुरे कोषे जनपदे बान्धवेषु सुहृत्सु च ।
कुशलं कौशिको राज्ञः पर्यपृच्छत्सुधार्मिकः ॥ ११ ॥
अपि ते संनताः सर्वे सामन्ता रिपवो जिताः ।
दैवं च मानुषं चैव कर्म ते साध्वनुष्ठितम् ॥ १२ ॥
वसिष्ठं च समागम्य प्रहसन्मुनिपुंगवः ।
यथार्हं चार्चयित्वैनं पप्रच्छानामयं तदा ॥ १३ ॥
ते सर्वे हृष्टमनसस्तस्य राज्ञो निवेशनम् ।
विविशुः सहितास्तेन निषेदुश्च यथार्हतः ॥ १४ ॥
अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ।
उवाच परमोदारो हृष्टस्तमभिपूजयन् ॥ १५ ॥

यथामृतस्य संप्राप्तिर्यथा वर्षमनूदके ।
यथा सदृशदारेषु पुत्रजन्माप्रजस्य वै ॥ १६ ॥
प्रणष्टस्य यथा लाभो यथा हर्षमहोदयः ।
तथैवागमनं मन्ये स्वागतं ते महामुने ॥ १७ ॥
कस्तेभिलषितः कामः किं करोमि प्रशाधि माम् ।
पात्रभूतोसि मे ब्रह्मन्दिष्ट्या प्राप्तोसि मानद ॥ १८ ॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
यस्माद्विप्रेन्द्रमद्राक्षं सुप्रभाता निशा मम ॥ १९ ॥
पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ।
ब्रह्मर्षित्वमनुप्राप्तः पूज्योसि बहुधा मया ॥ २० ॥
तदद्भुतमिदं विप्र पवित्रं परमं मम ।
शुभक्षेत्रगतश्चाहं तव संदर्शनात्प्रभो ॥ २१ ॥
ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति ।
इच्छाम्यनुगृहीतोहं त्वदर्थपरिवृद्धये ॥ २२ ॥
कार्यस्य न विमर्शं च गन्तुमर्हसि सुव्रत ।
कर्ता चाहमशेषेण दैवतं हि भवान्मम ॥ २३ ॥
इदमतिमधुरं निशम्य वाक्यं
श्रुतिसुखमात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा गुणे निविष्टो
मुनिवृषभः परमं जगाम हर्षम् ॥ २४ ॥

इति बालकाण्डे विश्वामित्रागमनं नाम विंशः सर्गः ॥ २० ॥

---

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोभ्यभाषत ॥ १ ॥
सदृशं राजशार्दूल त्वय्येतद्वाक्यमीरितम् ।
महावंशप्रसूतस्य वसिष्ठव्यपदेशिनः ॥ २ ॥
यस्तु मेभिमतः कामस्त्वत्त प्राप्त इतीप्सित. ।
यदुद्दिश्यागतश्चास्मि कार्यं तच्छ्रूयतामिति ॥ ३ ॥

अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ।
तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ॥ ४ ॥
व्रते तु बहुशस्तीर्णे समाप्त्यां राक्षसाधमौ ।
तौ मांसरुधिरौघेण वेदीं तामभ्यवर्षताम् ॥ ५ ॥
अवधूते तथाभूते तस्मिन्नियमनिश्चये ।
कृतश्रमो निरुत्साहस्तस्माद्देशादपक्रमे ॥ ६ ॥
न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव ।
तथाभूता हि सा चर्या न शापस्तत्र युज्यते ॥ ७ ॥
त्वत्प्रसादादविघ्नेन प्रापयेयं क्रियाफलम् ।
पातुमर्हसि मामार्तं शरणार्थिनमागतम् ॥ ८ ॥
स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम् ।
काकपक्षधरं वीरं ज्येष्ठं मे दातुमर्हसि ॥ ९ ॥
शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।
राक्षसा ये विकर्तारस्तेषामपि विनाशने ॥ १० ॥
श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः ।
त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति ॥ ११ ॥
न च तौ राममासाद्य शक्तौ स्थातुं कथंचन ।
न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् ॥ १२ ॥
वीर्योत्सिक्तौ हि तौ पापौ कालपाशवशं गतौ ।
रामस्य नरशार्दूल न पर्याप्तौ महात्मनः ॥ १३ ॥
न च पुत्रगतं स्नेहं कर्तुमर्हसि पार्थिव ।

दशरात्रेण मे यज्ञो भविता यत्र राक्षसौ ।
हन्तव्यौ तव पुत्रेण रामेणाद्भुतकर्मणा ॥ १८ ॥
नात्येति कालो यज्ञस्य यथायं मम राघव ।
तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः ॥ १९ ॥
इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ।
विरराम महातेजा विश्वामित्रो महामुनिः ॥ २० ॥
स तन्निशम्य राजेन्द्रो विश्वामित्रवचः शुभम् ।
शोकेन महताविष्टश्चचाल च मुमोह च ॥ २१ ॥
इति बालकाण्डे विश्वामित्रवाक्यं नामैकविंशः सर्गः ॥ २१ ॥

---

तच्छ्रुत्वा व्यथितो राजा विश्वामित्रस्य भाषितम् ।
मुहूर्तमिव निःसंज्ञः संज्ञावानिदमब्रवीत् ॥ १ ॥
ऊनषोडशवर्षोऽयं रामो राजीवलोचनः ।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥
इयमक्षौहिणी सेना यस्याहं पतिरीश्वरः ।
अनया सहितो गत्वा योद्धाहं तैर्निशाचरैः ॥ ३ ॥
इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्रविशारदाः ।
योग्या रक्षोगणैर्योद्धुं न रामं नेतुमर्हसि ॥ ४ ॥
अहमेव धनुष्पाणिर्गोप्ता समरमूर्धनि ।
यावत्प्राणान्धरिष्यामि तावद्योत्स्ये निशाचरैः ॥ ५ ॥
निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता ।
अहं तत्र गमिष्यामि न रामं नेतुमर्हसि ॥ ६ ॥
बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम् ।
न चासौ रक्षसां योग्यः कूटयुद्धा हि राक्षसाः ॥ ७ ॥
विप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे ।
जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि ॥ ८ ॥
नववर्षसहस्राणि मम जातस्य सांप्रतम् ।
वृद्धेनोत्पादिताः पुत्रा मया चैते कथचन ॥ ९ ॥

चतुर्णामात्मजानां हि प्रीतिः परमिका मम ।
ज्येष्ठे धर्मप्रधाने च न रामं नेतुमर्हसि ॥ १० ॥
अवश्यं यदि नेतव्यो रामो वै स त्वया मुने ।
चतुरङ्गबलोपेतस्ततो यातु मया सह ॥ ११ ॥
किंवीर्या राक्षसास्ते च कस्य पुत्राश्च के च ते ।
कथंप्रमाणाः के चैतान्रक्षन्ति मुनिपुंगव ॥ १२ ॥
कथं च प्रतिकर्तव्यं तेषां रामेण रक्षसाम् ।
मामकैर्वा बलैर्ब्रह्मन्मया वा कूटयोधिनाम् ॥ १३ ॥
सर्वं मे शंस भगवन्कथं तेषां मया रणे ।
स्थातव्यं दुष्टभावानां वीर्योत्सिक्ता हि राक्षसाः ॥ १४ ॥
तस्य तद्वचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ।
पौलस्त्यवंशप्रभवो रावणो नाम राक्षसः ॥ १५ ॥
स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ।
महाबलो महावीर्यो राक्षसैर्बहुभिर्वृतः ॥ १६ ॥
श्रूयते च महाराज रावणो राक्षसाधिपः ।
पुत्रो विश्रवसः क्रूरो भ्राता वैश्रवणस्य च ॥ १७ ॥
तेन संचोदितौ तौ तु राक्षसौ च महाबलौ ।
मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः ॥ १८ ॥
इत्युक्तो मुनिना तेन राजोवाच मुनिं तदा ।
नहि शक्तोस्मि संग्रामे स्थातुं तस्य दुरात्मनः ॥ १९ ॥
स त्वं प्रसादं धर्मज्ञ कुरुष्व मम पुत्रके ।
मम चैवाल्पभाग्यस्य दैवतं हि भवान्गुरुः ॥ २० ॥
देवदानवगन्धर्वा यक्षाः पतगपन्नगाः ।
न शक्ता रावणं सोढुं किं पुनर्मानवा युधि ॥ २१ ॥
स हि वीर्यवतां वीर्यमादत्त इति नः श्रुतम् ।
तेन चाहं न शक्तोस्मि संयोद्धुं तस्य वा बलैः ॥ २२ ॥
कथमप्यमरप्रख्यं संग्रामाणामकोविदम् ।
बालं मे तनयं ब्रह्मन्नैव दास्यामि पुत्रकम् ॥ २३ ॥

अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः ।
यज्ञविघ्नकरौ तौ ते नैव दास्यामि पुत्रकम् ॥ २४ ॥
मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ।
तयोरन्यतरेणाहं योद्धा स्यां ससुहृद्गणः ॥ २५ ॥

इति बालकाण्डे दशरथवाक्यं नाम द्वाविंशः सर्गः ॥ २२ ॥

---

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १ ॥
पूर्वं करिष्य इत्युक्त्वा प्रतिज्ञां हातुमिच्छसि ।
राघवाणामयुक्तोयं सत्यधर्मविपर्ययः ॥ २ ॥
यद्येतत्ते क्षमं राजन्गमिष्यामि यथागतम् ।
मिथ्याप्रतिज्ञः काकुत्स्थ सुखी भव सुतैः सह ॥ ३ ॥
तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः ।
चचाल वसुधा कृत्स्ना विवेश च भयं सुरान् ॥ ४ ॥
त्रस्तरूपं तु विज्ञाय जगत्सर्वं महानृषिः ।
नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ॥ ५ ॥
इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः ।
धृतिमान्सुव्रतः श्रीमान्न धर्मं हातुमर्हसि ॥ ६ ॥
त्रिषु लोकेषु विख्यातो धर्मात्मा इति राघव ।
स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ॥ ७ ॥
संश्रुत्यैव करिष्यामीत्यकुर्वाणस्य राघव ।
इष्टापूर्तवधो भूयात्तस्माद्रामं विसर्जय ॥ ८ ॥
कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ।
गुप्तं कुशिकपुत्रेण प्रधर्षयितुमाहवे ॥ ९ ॥
एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुध्याधिको लोके तपसश्च परायणम् ॥ १० ॥
दिव्यान्यस्त्राण्यशेषाणि वेदैष कुशिकात्मजः ।
देवाश्च न विदुर्यानि कुतोन्ये भुवि मानवाः ॥ ११ ॥

दत्तान्यस्मै कृशाश्वेन दिव्यान्यस्त्राण्यशेषतः ।
महीं पालयते पूर्वं प्रीतेनामिततेजसा ॥ १२ ॥
तेऽपि पुत्राः कृशाश्वस्य प्रजापतिसुतासुताः ।
नैकरूपा महावीर्या दीप्तिमन्तो जयावहाः ॥ १३ ॥
जया च विजया चैव दक्षकन्ये सुमध्यमे ।
ते सुवातेऽस्त्रशस्त्राणि शतं परमभास्वरम् ॥ १४ ॥
पञ्चाशतं सुतांल्लेभे जया नाम परान्पुरा ।
वधायासुरसैन्यानामप्रमेयानरूपिणः ॥ १५ ॥
विजयाजनयच्चापि पुत्रान्पञ्चाशतं पुनः ।
संहारान्नाम दुर्धर्षान्दुराक्रमान्बलीयसः ॥ १६ ॥
तानि चास्त्राणि वेत्त्येष यथावत्कुशिकात्मजः ।
अपूर्वाणां च जनने शक्तो भूयश्च धर्मवित् ॥ १७ ॥
तानि दास्यत्यशेषेण रामायैष महामुनिः ।
यैरस्त्रैस्तानि रक्षांसि रामो जेष्यत्यसंशयम् ॥ १८ ॥
अनुग्रहार्थं रामस्य प्रजानामपि चात्मनः ।
न रामगमने राजन्विचारयितुमर्हसि ॥ १९ ॥

इति बालकाण्डे वसिष्ठवाक्यं नाम त्रयोविंशः सर्गः ॥ २३ ॥

---

तथा वसिष्ठे ब्रुवति राजा दशरथः स्वयम् ।
प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ॥ १ ॥
कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च ।
पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥ २ ॥
स्नेहान्मूर्धन्युपाघ्राय राजा दशरथः सुतम् ।
ददौ कुशिकपुत्राय लक्ष्मणानुचरं तदा ॥ ३ ॥
ततो वायुः सुखस्पर्शो नीरजस्को ववौ शुचिः ।
विश्वामित्रगतं दृष्ट्वा रामं राजीवलोचनम् ॥ ४ ॥
पपात पुष्पवृष्टिः खाद्गीतनृत्यं च शुश्रुवे ।
शङ्खदुन्दुभिनिर्घोषः प्रयाते रघुनन्दने ॥ ५ ॥

विश्वामित्रो यथावग्रे ततो रामो महायशाः ।
काकपक्षधरो धन्वी तं च सौमित्रिरन्वयात् ॥ ६ ॥
विश्वामित्रगतं रामं दृष्ट्वा देवाः सवासवाः ।
प्रहर्षमतुलं प्राप्ता दशग्रीववधैषिणः ॥ ७ ॥
विश्वामित्रं महात्मानं तावुभौ रामलक्ष्मणौ ।
तदानुजग्मतुर्वीरौ यथेन्द्रं देवमश्विनौ ॥ ८ ॥
बद्धगोधाङ्गुलित्राणौ खड्गतूणधनुर्धरौ ।
तदानुजग्मतुः स्थाणुं कुमाराविव पावकी ॥ ९ ॥
अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ।
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥ १० ॥
वत्स राम जलं तावद्विधिवत्स्प्रष्टुमर्हसि ।
उपदेक्ष्यामि ते श्रेयो मा भूत्कालस्य पर्ययः ॥ ११ ॥
मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ।
न श्रमो न जरा वा ते भविता नाङ्गवैकृतम् ॥ १२ ॥
न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ।
न बाह्वोः सदृशो वीर्ये पृथिव्यामस्ति कश्चन ॥ १३ ॥
त्रिषु लोकेषु वै राम न भवेत्सदृशस्तव ।
बलामतिबलां चैवं पठतस्तव राघव ॥ १४ ॥
न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये ।
नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ ॥ १५ ॥
एतद्विद्याद्वयं प्राप्य यशश्चाव्ययमाप्स्यसि ।
बला चातिबला चैव ज्ञानविज्ञानमातरौ ॥ १६ ॥
क्षुत्पिपासे न ते राम भविष्येते न संशयः ।
सारतां त्रिषु लोकेषु गमिष्यसि च राघव ॥ १७ ॥
पितामहसुते ह्येते विद्ये तेजःसमन्विते ।
पात्रं त्वमसि काकुत्स्थ विद्ययोर्ग्रहणेनयोः ॥ १८ ॥
स्वभावजैर्गुणैर्दिव्यैः कामैरप्यतुलैर्युतः ।
भूयस्तत्र गुणोत्कर्षमेते विद्ये करिष्यतः ॥ १९ ॥

ततो रामो जलं स्पृष्ट्वा प्राञ्जलिः प्रणतः स्थितः ।
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ॥ २० ॥
विद्यासमुदितो रामः शुशुभे भूरिविक्रमः ।
सहस्ररश्मिर्भगवाञ्छरदीव दिवाकरः ॥ २१ ॥
गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे ।
ऊषुस्तां रजनीं तत्र सरय्वां सुसुखं त्रयः ॥ २२ ॥

इति बालकाण्डे विद्याप्रदानं नाम चतुर्विंशः सर्गः ॥ २४ ॥

---

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः ।
अभ्यभाषत काकुत्स्थं शयानं पर्णसंस्तरे ॥ १ ॥
कौशल्यासुप्रजा राम पूर्वा संध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ २ ॥
तस्यर्षेः परमोदारं वचः श्रुत्वा नरोत्तमौ ।
स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥ ३ ॥
कृताह्निकक्रियौ चापि विश्वामित्रं तपोनिधिम् ।
अभिवादयितुं तत्र सहितावुपतस्थतुः ॥ ४ ॥
तौ प्रयातौ महावीर्यौ दिव्यां त्रिपथगां नदीम् ।
ददृशाते ततस्तत्र सरय्वाः संगमे शुभे ॥ ५ ॥
तत्राश्रमपदं पुण्यमृषीणां भावितात्मनाम् ।
बहुवर्षसहस्राणि तप्यतां परमं तपः ॥ ६ ॥
तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमम् ।
ऊचतुस्तं महात्मानं विश्वामित्रमिदं वचः ॥ ७ ॥
कस्यायमाश्रमः पुण्यः को न्वस्मिन्वसते पुमान् ।
भगवञ्छ्रोतुमिच्छावः परं कौतूहलं हि नौ ॥ ८ ॥
तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुंगवः ।
अब्रवीच्छ्रूयतां राम यस्यायं पूर्व आश्रमः ॥ ९ ॥
कन्दर्पो मूर्तिमानासीत्काम इत्युच्यते बुधैः ।
आवेष्टुमभ्ययात्तूर्णं कृतोद्वाहमुमापतिम् ॥ १० ॥

तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ।
धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥ ११ ॥
अवध्यातस्य रौद्रेण चक्षुषा रघुनन्दन ।
व्यशीर्यन्त शरीरात्स्वात्सर्वगात्राणि दुर्मतेः ॥ १२ ॥
अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण ह ।
अनङ्ग इति विख्यातस्तदाप्रभृति राघव ॥ १३ ॥
स चाङ्गविषयः श्रीमान्यत्राङ्गं स मुमोच ह ।
तस्यायमाश्रमः पुण्यस्तस्येमे मुनयः पुरा ॥ १४ ॥
तपोदमरताः सर्वे पुराणा ब्रह्मवादिनः ।
निवसन्त्यत्र नियता तपोनिर्धूतकल्मषाः ॥ १५ ॥
इहाद्य रजनीमेकां वसाम शुभदर्शन ।
पुण्ययोः सरितोर्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६ ॥
अभिगच्छाम च स्नात्वा शुचयः पुण्यमाश्रमम् ।
इह कामाश्रमे राम सुखं वत्स्यामहे निशाम् ॥ १७ ॥
तेषां संवदतां तत्र तपोदीर्घेण चक्षुषा ।
विज्ञाय परमप्रीता मुनयो हर्षमागमन् ॥ १८ ॥
अर्घ्यं पाद्यं तथातिथ्यं निवेद्य कुशिकात्मजे ।
रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियाम् ॥ १९ ॥
सत्कार्यं समनुप्राप्य कथाभिरभिरम्य च ।
यथार्हमजपन्संध्यामृषयस्ते समाहिताः ॥ २० ॥
तत्रवासिभिरासीना मुनिभिः सुव्रतैः सह ।
न्यवसन्सुसुखं तत्र कामाश्रमपदे तदा ॥ २१ ॥

इति बालकाण्डे कामाश्रमनिवासो नाम पञ्चविंशः सर्गः ॥ २५ ॥

---

ततः प्रभाते विमले कृताह्निकमरिंदमौ ।
विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ॥ १ ॥
ते च सर्वे महात्मानो मुनयः संशितव्रताः ।
उपस्थाप्य शुभां नावं विश्वामित्रमथाब्रुवन् ॥ २ ॥

आरोहतु भवान्नावं राजपुत्रपुरस्कृतः ।
अरिष्टं गच्छ पन्थानं मा भूत्कालस्य पर्ययः
विश्वामित्रस्तथेत्युक्त्वा तानृषीन्प्रतिपूज्य च ।
ततार सहितस्ताभ्यां सरितं सागरंगमाम् ॥ ४
मध्यमागम्य तस्यास्तु सह रामः कनीयसा ।
तत्र शुश्रुवतुः शब्दं तोयसंरम्भवर्धितम् ॥ ५ ॥
अथ रामः सरिन्मध्ये पप्रच्छ मुनिपुंगवम् ।
वारिणो भिद्यमानस्य किमयं तुमुलो ध्वनिः ॥ ६ ॥
राघवस्य वचः श्रुत्वा कौतूहलसमन्वितम् ।
कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम् ॥ ७ ॥
कैलासशिखरे राम मनसा निर्मितं सरः ।
ब्रह्मणा प्रागिदं यस्मात्तदभून्मानसं सरः ॥ ८ ॥
तस्मात्सुस्राव सरसः सायोध्यामुपगूहते ।
सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ९ ॥
जाह्नवीमभिवृत्तायास्तस्याः शब्दोयमीदृशः ।
तोयसंघर्षजो राम प्रणामं नियतः कुरु ॥ १० ॥
चक्रतुस्तौ नमस्ताभ्यां नदीभ्यामथ राघवौ ।
तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥ ११ ॥
स वनं घोरसंकाश दृष्ट्वा नृपवरात्मजः ।
अविप्रहतमैक्ष्वाकुः पप्रच्छ मुनिपुंगवम् ॥ १२ ॥
कस्येदं मेघसंकाशं वनं घोरं प्रकाशते ।
दुर्गं पक्षिगणाकीर्णं झिल्लिकागणनादितम् ॥ १३ ॥
भैरवैः श्वापदैः कीर्णं शकुनैर्दारुणारवैः ।
सिंहव्याघ्रवराहर्क्षसङ्घिकुञ्जरसेविनम् ॥ १४ ॥
धवाश्वकर्णककुभैर्बिल्वतिन्दुकपाटलैः ।
द्रुमैः कण्टकिभिश्चैव कीर्णं किं न्विदमुच्यते ॥ १५ ॥
तमुवाच महातेजा विश्वामित्रो महामुनिः ।
श्रूयतां वत्स काकुत्स्थ कस्यैतद्दारुणं वनम् ॥ १६ ।

एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम ।
मलजाश्च करूषाश्च देवनिर्माणनिर्मितौ ॥ १७ ॥
सखायं नमुचिं हत्वा मलेन समभिप्लुतः ।
क्षुधा चैव सहस्राक्षो मित्रध्रुगभवत्किल ॥ १८ ॥
तमिह स्नापयामासुर्देवाः सर्षिगणाः पुरा ।
कलशैः पुण्यसलिलैः पूर्णैर्मलविशोधनैः ॥ १९ ॥
सोऽस्मिन्देशे मलं त्यक्त्वा देवः करुषमेव च ।
मित्राभिद्रोहसंयुक्तं परं हर्षमवाप्तवान् ॥ २० ॥
निर्मलो निष्करूषश्च शुचिरिन्द्रो यदाभवत् ।
तदा देशस्य सुप्रीतो ददौ वरमनुत्तमम् ॥ २१ ॥
इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ।
मलजाश्च करूषाश्च ममाङ्गमलधारिणौ ॥ २२ ॥
एवमस्त्विति तं देवाः पाकशासनमब्रुवन् ।
देशस्य नामानिर्वृत्तिं श्रुत्वा तां वासवेरिताम् ॥ २३ ॥
एतौ जनपदौ स्फीतौ दीर्घकालमरिंदम ।
मलजाश्च करूषाश्च मुदिता ऋद्धिसंपदा ॥ २४ ॥
कस्यचित्त्वथ कालस्य यक्षिणी कामरूपिणी ।
बलं नागसहस्रस्य धारयन्ती महाबला ॥ २५ ॥
ताडका नाम सुन्दस्य भार्या दैत्यपतेरभूत् ।
मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ॥ २६ ॥
इमौ जनपदौ नित्यं विनाशयति राघव ।
मलजांश्च करूषांश्च ताडका दुष्टचारिणी ॥ २७ ॥
सेयं पन्थानमावृत्य वसत्यत्यर्धयोजनम् ।
अत एव च गन्तव्यं ताडकाया वनं यतः ॥ २८ ॥
स्वबाहुबलमाश्रित्य जहि तां दुष्टचारिणीम् ।
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ २९ ॥
न हि कश्चिदिमं देशं शक्नोत्यागन्तुमीदृशम् ।
यक्षिण्या घोरया राम उत्सादितमसह्यया ॥ ३० ॥

इति ते सत्यमाख्यातं यथेदं दारुणं वनम् ।
यक्षिण्योत्सादितं पूर्वमद्यापि न निवर्तते ॥ ३१ ॥

इति बालकाण्डे ताडकावनप्रवेशो नाम षड्विंशः[1] सर्गः ॥ २६ ॥

---

अथ तस्याप्रमेयस्य मुनेर्वचनमद्भुतम् ।
श्रुत्वा रामस्ततो भूयः परिपप्रच्छ सशयम् ॥ १ ॥
अल्पवीर्या यदा यक्षाः श्रूयन्ते मुनिपुंगव ।
कथं नागसहस्रस्य धारयत्यबला बलम् ॥ २ ॥
इत्युक्तं वचनं श्रुत्वा राघवस्यामितौजसः ।
विश्वामित्रोऽब्रवीद्वाक्यं शृणु येन बलोत्कटा ॥ ३ ॥
पूर्वमासीन्महायक्षः सुकेतुरिति विश्रुतः ।
अनपत्यः शुभाचारः स च तेपे महत्तपः ॥ ४ ॥
पितामहश्च सुप्रीतस्तस्य यक्षपतेस्तदा ।
कन्यारत्नं ददौ राम ताडकां नाम नामतः ॥ ५ ॥
बलं नागसहस्रस्य ददौ चास्याः पितामहः ।
काङ्क्षतोऽप्यस्य पुत्रं हि न यक्षस्य ददौ प्रभुः ॥ ६ ॥
तां तु बालां विवर्धन्तीं रूपयौवनशालिनीम् ।
जम्भपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् ॥ ७ ॥
कस्यचित्त्वथ कालस्य यक्षी पुत्रं व्यजायत ।
मारीचं नाम दुर्धर्षं यः शापाद्राक्षसोऽभवत् ॥ ८ ॥
सुन्दे तु निहते तस्मिन्नगस्त्यमृषिसत्तमम् ।
ताडका सह पुत्रेण प्रधर्षयितुमुद्यता ॥ ९ ॥
भक्षार्थं जातसंरम्भा गर्जन्ती साभ्यधावत ।
आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः ।
राक्षसत्वं भजस्वेति मारीचं व्याजहार सः ॥ १० ॥
अगस्त्यः परमामर्षस्ताडकामपि शप्तवान् ।
पुरुषादी महायक्षी विकृता विकृतानना ।
इदं रूपं विहायाशु दारुणं रूपमस्तु ते ॥ ११ ॥

सैषा शापसमाविष्टा ताडका क्रोधमूर्छिता ।
देशमुत्सादयत्येनमगस्त्याध्युषितं पुरा ॥ १२ ॥
एवं तां राम दुर्वृत्तां यक्षीं परमदारुणाम् ।
गोब्राह्मणहितार्थाय जहि घोरपराक्रमाम् ॥ १३ ॥
न ह्येनां शापसंसृष्टां कश्चिदुत्सहते पुमान् ।
निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ॥ १४ ॥
न च ते स्त्रीवधकृते घृणा कार्या कथंचन ।
चातुर्वर्ण्यहितार्थं हि कर्तव्यं राजसूनुना ॥ १५ ॥
नृशंसमनृशंसं वा प्रजारक्षणकारणात् ।
पावनं वा सदोषं वा कर्तव्यं नात्र संशयः ॥ १६ ॥
राज्यभारनियुक्तानामेष धर्मः सनातनः ।
अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्या न विद्यते ॥ १७ ॥
श्रूयते हि पुरा शक्रो विरोचनसुतां नृप ।
पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥ १८ ॥
विष्णुना च पुरा राम भृगुपत्नी पतिव्रता ।
अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ॥ १९ ॥
एतैरन्यैश्च बहुभी राजपुत्रैर्महात्मभिः ।
अधर्मनिरता नार्यो हताः पुरुषसत्तम ॥ २० ॥

इति बालकाण्डे ताडकोत्पत्तिर्नाम सप्तविंशः सर्गः ॥ २७ ॥

---

मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतम् ॥ १ ॥
अहं पित्रा समादिष्टो मात्रा चैव महामुने ।
विश्वामित्रस्य वचनं त्वया कार्यमिति प्रभो ॥ २ ॥
सोऽहं पितुर्नियोगेन तव चानुपमद्युते ।
करिष्ये दुष्टचारिण्यास्ताडकाया वधं मुने ॥ ३ ॥
गोब्राह्मणहितार्थाय देशस्यास्य हिताय च ।
तवैतदप्रतीपेन वचनं कर्तुमुद्यतः ॥ ४ ॥

एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिंदमः ।
ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन् ॥ ५ ॥
तेन शब्देन वित्रस्ता मृगास्तद्वनवासिनः ।
ताडका चापि संभ्रान्ता ज्याशब्दं प्रति बोधिता ॥ ६ ॥
तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्च्छिता ।
श्रुत्वा चाभ्यद्रवत्क्रुद्धा यत्र शब्दो विनिःसृतः ॥ ७ ॥
तां दृष्ट्वा राघवः क्रुद्धो विकृतां विकृताननाम् ।
प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत ॥ ८ ॥
पश्य लक्ष्मण यक्षिण्या भैरवं दारुणं वपुः ।
भिद्येरन्दर्शनादस्या भीरूणां हृदयानि च ॥ ९ ॥
एनां पश्य दुराधर्षां मायाबलसमन्विताम् ।
विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ १० ॥
न ह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम् ।
वीर्यं चास्या गतिं चैव हन्यामिति हि मे मतिः ॥ ११ ॥
एवं ब्रुवाणे रामे तु ताडका क्रोधमूर्च्छिता ।
उद्यम्य बाहू गर्जन्ती राममेवाभ्यधावत ॥ १२ ॥
विश्वामित्रस्तु ब्रह्मर्षिर्हुंकारेणाभिभर्त्स्य ताम् ।
स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥ १३ ॥
उद्धून्वाना रजो घोरं ताडका राघवावुभौ ।
रजोमेघेन महता मुहूर्तं सा व्यमोहयत् ॥ १४ ॥
ततो मायां समास्थाय शिलावर्षेण राघवौ ।
अवाकिरत्सुमहता ततश्चुक्रोध राघवः ॥ १५ ॥
शिलावर्षं महत्तस्याः शरवर्षेण राघवः ।
प्रतिवार्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥ १६ ॥
ततश्छिन्नभुजाश्रान्तामभ्याशे परिगर्जतीम् ।
सौमित्रिरकरोत्क्रोधाद्धृतकर्णाग्रनासिकाम् ॥ १७ ॥
कामरूपधरा सा तु कृत्वा रूपाण्यनेकशः ।
अन्तर्धानं गता यक्षी मोहयन्ती स्वमायया ॥ १८ ॥

ततस्तावश्मवर्षेण कीर्यमाणौ समन्ततः ।
दृष्ट्वा गाधिसुतः श्रीमानिदं वचनमब्रवीत् ॥ १९ ॥
अलं ते घृणया राम पापैषा दुष्टचारिणी ।
यज्ञविघ्नकरी यक्षी पुरा वर्धेत मायया ॥ २० ॥
वध्यतां तावदेवैषा पुरा संध्या प्रवर्तते ।
रक्षांसि संध्याकालेषु दुर्धर्षाणि भवन्ति हि ॥ २१ ॥
इत्युक्तस्तु तदा यक्षीमश्मवर्षाभिवर्षिणीम् ।
दर्शयञ्छब्दवेधित्वं तां रुरोध स सायकैः ॥ २२ ॥
सा रुद्धा बाणजालेन मायाबलसमन्विता ।
अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी ॥ २३ ॥
तामापतन्तीं वेगेन विक्रान्तामशनीमिव ।
ताडकां विकृताकारां जिघांसन्तीं सुदारुणाम् ॥ २४ ॥
महाभ्रचयसंकाशां समुच्छ्रितभुजद्वयाम् ।
विव्याधोरसि बाणेन चन्द्रार्धाकारवर्चसा ॥ २५ ॥
सा तेन वज्रपातेन बाणेन भृशविक्षता ।
ववाम रुधिरं भूरि पपात च ममार च ॥ २६ ॥
तां हतां भीमसंकाशां दृष्ट्वा सुरपतिस्तदा ।
साधु साध्विति काकुत्स्थं सुराश्च समपूजयन् ॥ २७ ॥
उवाच ॥ भृशं प्रीतः सहस्राक्षोम्बरे स्थितः ।
सह सर्वामरगणैर्विश्वामित्रमिदं वचः ॥ २८ ॥
मुने कौशिक पश्यास्मान्देवान्सेन्द्रानुपस्थितान् ।
तोषितान्कर्मणानेन रामस्यामिततेजसः ॥ २९ ॥
अस्मान्नियोगाद्भद्र ते स्नेहं दर्शय राघवे ।
तपोयोगबलेनैनमाप्याययितुमर्हसि ॥ ३० ॥
प्रजापतिसुताश्चैव कृशाश्वाद्राजसत्तमात् ।
यान्यवाप्तानि तेस्त्राणि तान्यस्मै प्रतिपादय ॥ ३१ ॥
पात्रभूतो हि ते ब्रह्मंस्तवानुगमने रतः ।
कर्तव्ये सुमहत्कार्यमस्माकं राजसूनुना ॥ ३२ ॥

एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा यथागतम् ।
विश्वामित्रं पूजयन्तस्ततः संध्या प्रवर्तते ॥ ३३ ॥
ततो मुनिवरः प्रीतस्ताडकावधतोषितः ।
रामं मूर्धन्युपाघ्राय इदं वचनमब्रवीत् ॥ ३४ ॥
इहाद्य रजनीं राम वसाव शुभदर्शन ।
श्वः प्रभाते गमिष्यामस्तदाश्रमपदं मम ॥ ३५ ॥
विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः ।
उवास रजनीं तत्र ताडकाया वने सुखम् ॥ ३६ ॥
मुक्तशापं वनं तच्च तस्मिन्नेव तदाहनि ।
रमणीयं विबभ्राज यथा चैत्ररथं वनम् ॥ ३७ ॥
निहत्य तां यक्षसुतां स रामः
प्रशस्यमानः सुरसिद्धसंघैः ।
उवास तस्मिन्मुनिना सहैव
प्रभातवेलां प्रति बोध्यमानः ॥ ३८ ॥

इति बालकाण्डे ताडकावधो नामाष्टाविंशः सर्गः ॥ २८ ॥

---

अथ तां रजनीमुष्य विश्वामित्रो महामुनिः ।
प्रहस्य राघवं वाक्यमुवाच मधुरस्वरम् ॥ १ ॥
परितुष्टोस्मि भद्रं ते राजपुत्र महायशः ।
प्रीत्या परमया युक्तो ददाम्यस्त्राण्यशेषतः ॥ २ ॥
देवासुरगणान्वापि सगन्धर्वोरगान्भुवि ।
यैरमित्रान्प्रसह्याजौ वशीकृत्य जयिष्यसि ॥ ३ ॥
प्रीतिदायं च दास्यामि सर्वाण्यस्त्राणि सर्वशः ।
यान्यहं वेद्मि काकुत्स्थ पात्रं ह्येषां मतोसि मे ॥ ४ ॥
दण्डचक्रं महद्दिव्यं तव दास्यामि राघव ।
धर्मचक्रं ततो वीर कालचक्रं तथैव च ॥ ५
विष्णुचक्रमथात्युग्रमैन्द्रं चक्रं च दुर्जयम् ।
वज्रमस्त्रं नरश्रेष्ठ शैवं शूलवरं तथा ॥ ६ ॥

अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव ।
ददामि ते महाबाहो ब्राह्ममस्त्रमनुत्तमम् ॥ ७ ॥
गदे द्वे चैव काकुत्स्थ मोदकीशिखरे शुभे ।
प्रदीप्ते नरशार्दूल प्रयच्छामि नृपात्मज ॥ ८ ॥
धर्मपाशं तथैवास्त्रं कालपाशं च दुर्जयम् ।
वारुणं चापि ते पाशं ददामि परमार्चितम् ॥ ९ ॥
शुष्कार्द्रे चाशनी राम गृहाणेमे मयोद्यते ।
पैनाकमपि चैवास्त्रमस्त्रं नारायणं तथा ॥ १० ॥
आग्नेयमस्त्रं दयितं शिखरं नाम नामतः ।
वायव्यं मथनं नाम ददामि तव चानघ ॥ ११ ॥
अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च ।
शक्ती च द्वे गृहाणेमे अमोघां विजयां तथा ॥ १२ ॥
कङ्कालमुशलं घोरं कापालमथ कङ्कणम् ।
धारयन्त्यसुरा यानि ददाम्येतानि सर्वशः ॥ १३ ॥
वैद्याधरं महास्त्रं च नन्दनं नाम नामतः ।
असिरत्नं महाबाहो ददामि नृवरात्मज ॥ १४ ॥
गान्धर्वमस्त्रं दयितं मोहनं नाम नामतः ।
प्रस्वापनप्रशमने दद्मि सौर्यं च राघव ॥ १५ ॥
वर्षणं शोषणं चैव संतापनविलेपने ।
मदनं चैव दुर्धर्षं कन्दर्पदयितं तथा ॥ १६ ॥
रक्षाभिपादं पैशाचं कौबेरं च ददामि ते ।
राक्षसं चारिसैन्यानां श्रीधृतिप्राणनाशनम् ॥ १७ ॥
सत्यं चैवानृतं चास्त्रं महामायास्त्रमेव च ।
सौरं तेजःप्रभं नाम परतेजोपकर्षणम् ॥ १८ ॥
सोमास्त्रं शिशिरं नाम त्वाष्ट्रं चापि सुदामनम् ।
मारणं चास्त्रमजितं शीतेषुमपि मानवम् ॥ १९ ॥
एवमादीनि चास्त्राणि ददामि दयितोसि मे ।
गृहाणैतानि मत्तस्त्वमस्त्राणि नृवरात्मज ॥ २० ॥

स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ।
ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम् ॥ २१ ॥
सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् ।
तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ॥ २२ ॥
जपतोथ मुनेस्तस्य मन्त्रग्राममशेषतः ।
उपतस्थुर्महास्त्राणि मूर्तिमन्ति नृपात्मजम् ॥ २३ ॥
ऊचुश्च मुदिता रामं सर्वे प्राञ्जलयस्तदा ।
इमे स्म परमोदार किंकरास्तव राघव ॥ २४ ॥
प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना ।
मानसा मे भविष्यध्वमिति तानभ्यचोदयत् ॥ २५ ॥
ततः प्रीतमना रामो विश्वामित्रं महामुनिम् ।
अभिवाद्य महातेजा गमनायोपचक्रमे ॥ २६ ॥

इति बालकाण्डे अस्त्रग्रामप्रदानं नामैकोनत्रिंशः सर्गः ॥ २९ ॥

---

प्रतिगृह्य ततोस्त्राणि प्रहृष्टवदनः शुचिः ।
गच्छन्नेव च काकुत्स्थो विश्वामित्रमथाब्रवीत् ॥ १ ॥
गृहीतास्त्रोस्मि भगवन्दुराधर्षः सुरैरपि ।
अस्त्राणां त्वहमिच्छामि संहारान्मुनिपुंगव ॥ २ ॥
एवं ब्रुवति काकुत्स्थे विश्वामित्रो महातपाः ।
संहारान्व्याजहाराथ धृतिमान्सुव्रतः शुचिः ॥ ३ ॥
सत्यवन्तं सत्यकीर्तिं धृष्टं रभसमेव च ।
प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४ ॥
लक्ष्यालक्ष्याविमौ चैव दृढनाभसुनाभकौ ।
दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ ॥ ५ ॥
ज्योतिष शकुनं चैव नैरास्यविमलावुभौ ।
यौगन्धरविनिद्रौ च दैत्यप्रमथनौ तथा ॥ ६ ॥
करवीर रतिं चैव धनधान्यं च राघव ।
जृम्भकं स्वर्णनाभं च संधानवरणावुभौ ॥ ७ ॥

कृशाश्वतनयान्नाम भास्वरान्कामरूपिणः ।
प्रतीच्छ मम भद्रं ते पात्रभूतोसि राघव ॥ ८ ॥
बाढमित्येव काकुत्स्थो विश्वामित्रात्तपोधनात् ।
जग्राह तानपि तथा स्तम्भकान्निपुजम्भकान् ॥ ९ ॥
दिव्यमूर्तिधरास्ते हि दिव्याभरणभूषिताः ।
केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा ॥ १० ॥
ऊचुः प्राञ्जलयो भूत्वा रामं मधुरभाषिणः ।
इमे स्म वशगा राम शाधि नस्त्वमिह स्थितान् ॥ ११ ॥
गम्यतामिति तानाह यथेष्टं रघुनन्दनः ।
मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ॥ १२ ॥
अथ ते राममामन्त्र्य कृत्वा चापि प्रदक्षिणम् ।
एवमस्त्विति चैवोक्त्वा प्रतिजग्मुर्यथागतम् ॥ १३ ॥
तान्विसृज्य ततो रामो विश्वामित्रं महामुनिम् ।
गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ॥ १४ ॥
किमेतन्मेघसंकाशं पर्वतस्याविदूरतः ।
वृक्षखण्डमितो भाति परं कौतूहलं हि मे ॥ १५ ॥
दर्शनीयं मृगाकीर्णं मनोहरमतीव च ।
नानाप्रकारैः शकुनैर्वल्गुनादैरलङ्कृतम् ॥ १६ ॥
निःसृताः स्म मुनिश्रेष्ठ कान्ताराद्रोमहर्षणात् ।
अनया त्ववगच्छामि देशस्य सुखवत्तया ॥ १७ ॥
सर्वं मे शंस भगवन्कस्याश्रमपदं त्विदम् ।
संप्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः ॥ १८ ॥
तव यज्ञस्य विघ्नाय दुरात्मानो महामुने ।
भगवंस्तस्य को देशः सा यत्र तव याज्ञिकी ॥ १९ ॥
रक्षितव्या क्रिया ब्रह्मन्मया वध्याश्च राक्षसाः ।
एतत्सर्वं मुनिश्रेष्ठ श्रोतुमिच्छाम्यहं प्रभो ॥ २० ॥
इति बालकाण्डे संहारप्रदानं नाम त्रिंशः सर्गः ॥ ३० ॥

अथ तस्याप्रमेयस्य तद्वनं परिपृच्छतः ।
विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे ॥ १ ॥
इह राम महाबाहो विष्णुर्देवनमस्कृतः ।
तपश्चरणयोगार्थमुवास स महातपाः ॥ २ ॥
एष पूर्वाश्रमो राम वामनस्य महात्मनः ।
सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः ॥ ३ ॥
अभिभूय च देवेन्द्रं पुरा वैरोचनिर्बलिः ।
त्रैलोक्यराज्यं बुभुजे बलोत्सेकमदान्वितः ॥ ४ ॥
ततो बलौ तदा यज्ञं यजमाने भयार्दिताः ।
इन्द्रादयः सुरगणा विष्णुमूचुरिहाश्रमे ॥ ५ ॥
बलिर्वैरोचनिर्विष्णो यजतेऽसौ महाबलः ॥
कामदः सर्वभूतानां महर्द्धिरसुराधिपः ॥ ६ ॥
ये चैनमभिवर्तन्ते याचितार इतस्ततः ।
यच्च यत्र यथावच्च सर्वं तेभ्यः प्रयच्छति ॥ ७ ॥
स त्वं सुरहितार्थाय मायायोगमुपाश्रितः ।
वामनत्वं गतो विष्णो कुरु कल्याणमुत्तमम् ॥ ८ ॥
एतस्मिन्नन्तरे राम कश्यपोऽग्निसमप्रभः ।
अदित्या सहितो राम दीप्यमान इवौजसा ॥ ९ ॥
देवीसहायो भगवान्दिव्यवर्षसहस्रकम् ।
व्रतं समाप्य वरदं तुष्टाव मधुसूदनम् ॥ १० ॥
तपोमयं तपोराशिं तपोमूर्तिं तपोधनम् ।
तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ॥ ११ ॥
शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो ।
त्वमनादिरनिर्देश्यस्त्वामहं शरणं गतः ॥ १२ ॥
तमुवाच हरिः प्रीतः कश्यपं धूतकल्मषम् ।
वरं वरय भद्रं ते वरार्होऽसि मतो मम ॥ १३ ॥
तच्छ्रुत्वा वचनं तस्य मारीचः कश्यपोऽब्रवीत् ।
पुत्रत्वं गच्छ भगवन्नदित्या मम चानघ ॥ १४ ॥

भ्राता भव यवीयांस्त्वं शक्रस्यासुरसूदन ।
शोकार्तानां तु देवानां साहाय्यं कर्तुमर्हसि ॥ १५ ॥
अथ विष्णुर्महातेजा अदित्यां समजायत ।
छत्री भिक्षुकरूपेण कमण्डलुशिखोज्ज्वलः ॥ १६ ॥
एवमुक्तः सुरैर्विष्णुर्वामनं रूपमास्थितः ।
वैरोचनिमुपागम्य त्रीन्ययाचात्मनः क्रमान् ॥ १७ ॥
लब्ध्वा च त्रीन्क्रमान्विष्णुः कृत्वा रूपमथाद्भुतम् ।
त्रिभिः क्रमैस्तदा लोकानाजहार त्रिविक्रमः ॥ १८ ॥
एकेन हि पदा कृत्स्नां पृथिवीं सोध्यतिष्ठत ।
द्वितीयेनाव्ययं व्योम द्यां तृतीयेन राघव ॥ १९ ॥
तं चासुरं बलिं कृत्वा पातालतलवासिनम् ।
त्रैलोक्यराज्यमिन्द्राय ददावुद्धृत्य कण्टकम् ॥ २० ॥
तेनैव पूर्वोध्युषित आश्रमः पुण्यकर्मणा ।
मयापि भक्त्या तस्यैष वामनस्य निषेव्यते ॥ २१ ॥
एनमाश्रममायान्ति राक्षसा विघ्नकारिणः ।
अत्र ते पुरुषव्याघ्र हन्तव्या दुष्टचारिणः ॥ २२ ॥
अद्य गच्छामहे राम सिद्धाश्रममनुत्तमम् ।
तदाश्रमपदं तात तवाप्येतद्यथा मम ॥ २३ ॥
इत्युक्त्वा परमप्रीतो गृह्य रामं सलक्ष्मणम् ।
प्रविशन्नाश्रमपदं व्यरोचत महामुनिः ॥ २४ ॥
तं दृष्ट्वाभ्यागतं दूरात्सिद्धाश्रमनिवासिनः ।
उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ॥ २५ ॥
प्रविष्टाय ददुश्चास्मै पाद्यार्घ्यासनसत्क्रियाम् ।
तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ॥ २६ ॥
मुहूर्तमथ विश्रान्तौ राजपुत्रावरिंदमौ ।
प्राञ्जली मुनिशार्दूलमूचतू रघुनन्दनौ ॥ २७ ॥
अद्यैव दीक्षां प्रविश भद्रं ते मुनिपुंगव ।
सिद्धाश्रमोयं सिद्धः स्यात्सत्यमस्तु वचस्तव ॥ २८ ॥

एवमुक्तो महातेजा विश्वामित्रो महामुनिः ।
प्रविवेश तदा दीक्षां नियतो नियतेन्द्रियः ॥ २९ ॥
कुमारावपि तां रात्रिमुषित्वा सुसमाहितौ ।
प्रभातकाले चोत्थाय पूर्वां संध्यामुपास्य च ॥ ३० ॥
स्पृष्टोदकं शुची जाप्यं समाप्य नियमेन च ।
हुताग्निहोत्रमासीनं विश्वामित्रमवन्दताम् ॥ ३१ ॥

इति बालकाण्डे सिद्धाश्रमनिवासो नामैकत्रिंशः सर्गः ॥ ३१ ॥

---

अथ तौ देशकालज्ञौ राजपुत्रावरिंदमौ ।
कालयुक्तमिदं वाक्यमब्रूतां कौशिकं मुनिम् ॥ १ ॥
भगवञ्छ्रोतुमिच्छावो यस्मिन्काले निशाचरौ ।
संरक्षणीयौ तौ ब्रूहि नातिवर्तेत तत्क्षणम् ॥ २ ॥
एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया ।
सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ ॥ ३ ॥
अद्यप्रभृति षड्रात्रं रक्षतं राघवौ युवाम् ।
दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति ॥ ४ ॥
तौ तु तद्वचनं श्रुत्वा मुनीनां भावितात्मनाम् ।
अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ॥ ५ ॥
उपासांचक्रतुर्वीरौ यत्तौ परमधन्विनौ ।
ररक्षतुर्मुनिवरं विश्वामित्रमरिंदमौ ॥ ६ ॥
अथ काले गते तस्मिन्षष्ठेऽहनि समागते ।
सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥ ७ ॥
अद्यपूर्वं महाघोरा राक्षसा न समागताः ।
अस्मिन्दिने महाघोरं रक्षसामावयोर्मृधम् ॥ ८ ॥
रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया ।
प्रजज्वाल तदा वेदी सोपाध्यायपुरोहिता ॥ ९ ॥
सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया ।
मन्त्रवच्च यथान्यायं यज्ञोऽसौ संप्रवर्तते ॥ १० ॥

अथाकाशे महाञ्छब्दः प्रादुरासीद्भयानकः ।
आवार्य गगनं मेघो यथा प्रावृषि दृश्यते ॥ ११ ॥
तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ।
मारीचश्च सुबाहुश्च तयोरनुचराश्च ये ॥ १२ ॥
आगम्य भीमसंकाशा रुधिरौघानवासृजन् ।
सहसाभिद्रुतान्रामस्तानपश्यत्ततो दिवि ॥ १३ ॥
स तानापततो दृष्ट्वा रुधिरौघप्रवर्षिणः ।
उवाच लक्ष्मणं वाक्यं रामो राजीवलोचनः ॥ १४ ॥
पश्य लक्ष्मण दुर्वृत्तान्राक्षसान्पिशिताशनान् ।
मानवास्त्रसमाधूताननिलेन यथा घनान् ॥ १५ ॥
इत्युक्त्वा मानवास्त्रं च चापे संधाय वेगवान् ।
चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ १६ ॥
स तेन परमास्त्रेण मानवेन समाहितः ।
संपूर्णं योजनशतं क्षिप्तः सागरसंप्लवे ॥ १७ ॥
विचेतनं विघूर्णन्तं शीतेषु बलपीडितम् ।
निरस्तं दृश्य मारीचं रामो लक्ष्मणमब्रवीत् ॥ १८ ॥
पश्य लक्ष्मण शीतेषुं मानवं मन्त्रसंहितम् ।
मोहयित्वा नयत्येनं न च प्राणैर्वियुज्यते ॥ १९ ॥
इमानपि वधिष्यामि निर्घृणान्दुष्टचारिणः ।
राक्षसान्पापकर्मस्थान्यज्ञघ्नान्रुधिराशनान् ॥ २० ॥
संगृह्यास्त्रं ततो रामो दीप्तमाग्नेयमुत्तमम् ।
सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ॥ २१ ॥
शेषान्वायव्यमादाय निजघान महायशाः ।
राघवः परमोदारो मुनीनां मुदमावहन् ॥ २२ ॥
स हत्वा राक्षसान्सर्वान्यज्ञघ्नान्रघुनन्दनः ।
ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ २३ ॥
अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ।
निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥ २४ ।

आयागभूत नृपतेस्तस्य वेश्मनि राघव ।
अर्चित विविधैर्गन्धैर्धूपैश्चागुरुगन्धिभि ॥ १३ ॥
तथेत्युक्त्वा ततो राम प्रयातुमुपचक्रमे ।
विश्वामित्रपुरोगैस्तैर्महर्षिभिरुदारधी ॥ १४ ॥
विश्वामित्रोथ भगवानामन्त्र्य वनदेवता ।
उवाचेद ततो वाक्य यियासुर्मिथिला प्रति ॥ १५ ॥
स्वस्ति वोस्तु गमिष्यामि सिद्ध सिद्धाश्रमादहम् ।
उत्तरे जाह्नवीतीरे हिमवन्त शिलोच्चयम् ॥ १६ ॥
प्रदक्षिणमुपावृत्य तत सिद्धाश्रमं मुनि ।
उत्तरा दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १७ ॥
त व्रजन्त मुनिवरमन्वीयुरनुसारिण ।
शकटीशतमात्र च प्रयाणे ब्रह्मवादिन ॥ १८ ॥
मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिन ।
अनुजग्मुर्महात्मान विश्वामित्र तपोनिधिम् ॥ १९ ॥
ते गत्वा दूरमध्वान लम्बमाने दिवाकरे ।
वास चक्रुर्मुनिगणा शोणतीर समागता ॥ २० ॥
गते त्वस्त दिनकरे स्नात्वा हुतहुताशना ।
विश्वामित्र पुरस्कृत्य निषेदुरमितौजस ॥ २१ ॥
रामोपि सहसौमित्रिरभिवाद्य तपोधनान् ।
निषसादाग्रतस्तस्य विश्वामित्रस्य धीमत ॥ २२ ॥
अथ रामोञ्जलि कृत्वा विश्वामित्रमृषिं तदा ।
पप्रच्छ नरशार्दूल कौतूहलसमन्वित ॥ २३ ॥
भगवान्को न्वय देश समृद्धजनशोभित ।
श्रोतुमिच्छामि भद्र ते वक्तुमर्हसि तत्त्वत ॥ २४ ॥
चोदितो रामवाक्येन तस्य देशस्य विस्तरम् ।
विश्वामित्रो महातेजा व्याहर्तुमुपचक्रमे ॥ २५ ॥

इति बालकाण्डे शोणतीरनिवासो नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

ब्रह्मयोनिर्महानासीत्कुशो नाम जनाधिपः ।
अक्लिष्टव्रतधर्मज्ञः सज्जनप्रतिपूजकः ॥ १ ॥
स महात्मा कुलीनायां जायायां सुमहाबलान् ।
वैदर्भ्यां जनयामास चतुरः सदृशान्सुतान् ॥ २ ॥
कुशाम्बं कुशनाभं च अमूर्तरजसं वसुम् ।
दीप्तियुक्तान्महोत्साहान्क्षत्रधर्मचिकीर्षया ॥ ३ ॥
तानुवाच कुशः पुत्रान्धर्मिष्ठान्सत्यवादिनः ।
क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम् ॥ ४ ॥
कुशस्य वचनं श्रुत्वा चत्वारो लोकसंमताः ।
निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ५ ॥
कुशाम्बस्तु महातेजा कौशाम्बीमकरोत्पुरीम् ।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ६ ॥
अमूर्तरजसो नाम धर्मारण्यं महीपतेः ।
चक्रे पुरवरं राजा वसुर्नाम गिरिव्रजम् ॥ ७ ॥
एषा वसुमती राम वसोस्तस्य महात्मनः ।
एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ८ ॥
सुमागधी नदी रम्या मगधान्विश्रुता ययौ ।
पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ९ ॥
सैषा हि मागधी नाम वसोस्तस्य महात्मनः ।
पूर्वाभिचरिता राम सुक्षेत्रा सस्यमालिनी ॥ १० ॥
कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् ।
जनयामास धर्मात्मा घृताच्यां रघुनन्दन ॥ ११ ॥
रूपयौवनशालिन्यस्ताः कदाचित्स्वलंकृताः ।
उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ १२ ॥
गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च राघव ।
आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ १३ ॥
अथ ताश्चारुसर्वाङ्गी रूपेणाप्रतिमा भुवि ।
दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १४ ॥

अहं व: कामये सर्वा भार्या मम भविष्यथ।
मानुष्यस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १५ ॥
चलं हि यौवनं नित्यं मानुषेषु विशेषत:।
अक्षयं यौवनं प्राप्ता अमर्यश्च भविष्यथ ॥ १६ ॥
तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मण:।
अपहास्य ततो वाक्यं कन्याशतमथाब्रवीत् ॥ १७ ॥
अन्तश्चरसि भूतानां सर्वेषां किल मारुत।
प्रभावज्ञा: स्म ते सर्वा: किमस्मानवमन्यसे ॥ १८ ॥
कुशनाभसुता: सर्वा: समर्थाश्च सुरोत्तम।
स्थानाच्च्यावयितुं देवं रक्षामस्तु कुलं वयम् ॥ १९ ॥
मा भूत्स कालो दुर्मेध: पितरं सत्यवादिनम्।
नावमन्य स्वधर्मेण स्वयंवरमुपास्महे ॥ २० ॥
पिता वै प्रभुरस्माकं दैवतं परमं हि स:।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥ २१ ॥
तासां तद्वचनं श्रुत्वा वायु: परमकोपन:।
प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभु: ॥ २२ ॥
ता: कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम्।
प्रापतन्भुवि संभ्रान्ता: सलज्जा: साश्रुलोचना: ॥ २३ ॥
स च ता दयिता दीना: कन्या: परमशोभना:।
दृष्ट्वा भग्नास्तदा राजा संभ्रान्त इदमब्रवीत् ॥ २४ ॥
किमिदं कथ्यतां पुत्र्य: को धर्ममवमन्यते।
कुब्जा: केन कृता: सर्वाश्चेष्टन्त्यो नाभिभाषथ ॥ २५ ॥
तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमत:।
शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत ॥ २६ ॥
वायु: सर्वात्मको राजन्प्रधर्षयितुमिच्छति।
अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ २७ ॥
सोऽस्माभिरुक्त: सर्वाभिर्वायु: कामवशं गत:।
पितृमत्य: स्म भद्रं ते स्वच्छन्दे न वयं स्थिता: ॥ २८ ॥

पितर नो वृणीष्व त्व यदि नो दास्यते तव ।
न वय स्वैरचारिण्य प्रसीद भगवन्निति ॥ २९ ॥
तेन पापानुबन्धेन वचन न प्रतीच्छता ।
एव ब्रुवन्त्य सर्वा स्म वायुनाभिहता भृशम् ॥ ३० ॥
तासा तु वचन श्रुत्वा राजा परमधार्मिक ।
प्रत्युवाच महातेजा कन्याशतमनुत्तमम् ॥ ३१ ॥
क्षान्त क्षमावता पुत्र्य कर्तव्य सुमहत्कृतम् ।
ऐकमत्यमुपागम्य कुल चावेक्षितं मम ॥ ३२ ॥
अलकारो हि नारीणा क्षमा तु पुरुषस्य वे ।
दुष्कर तच्च वै क्षान्त त्रिदशेषु विशेषत ॥ ३३ ॥
क्षमा दान क्षमा सत्य क्षमा यज्ञश्च पुत्रिका ।
क्षमा यश क्षमा धर्म क्षमाया विष्ठित जगत् ॥ ३४ ॥
प्रदानसमग चैव मन्येह वोद्य सर्वश ।
गम्यतामिष्टत पुत्र्यश्चिन्तयिष्यामि वो हितम् ॥ ३५ ॥
विसृज्य नेव ता कन्यास्तत स नृपसत्तम ।
तासा प्रदान धर्मज्ञो मन्त्रयामास मन्त्रिभि ॥ ३६ ॥
यद्वायुना च ता कन्यास्तत्र कुब्जीकृता पुरा ।
कान्यकुब्जमिति ख्यात तत प्रभृति तत्पुरम् ॥ ३७ ॥
एतस्मिन्नेन काले तु चूली नाम महाद्युति ।
ऊर्ध्वरेता शुभाचारो ब्राह्म तप उपागमत् ॥ ३८ ॥
तपस्यन्तमृषि तत्र गन्धर्वी पर्युपासते ।
सोमदानाम भद्र त ऊर्मिजातनया तदा ॥ ३९ ॥
सा च त प्रणता भूत्वा शुश्रूषणपरायणा ।
उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरु ॥ ४० ॥
स च ता कालयोगेन प्रोवाच रघुनन्दन ।
परितुष्टोस्मि भद्र ते किं करोमि तव प्रियम् ॥ ४१ ॥
परितुष्ट मुनि ज्ञात्वा गन्धर्वी मधुरस्वरा ।
उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥ ४२ ॥

लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपा ।
ब्राह्मेण तपसा युक्त पुत्रमिच्छामि धार्मिकम् ॥ ४३ ॥
अपतिश्चास्मि भद्र ते भार्या चास्मि न कस्यचित् ।
ब्राह्मणोपगतायास्त्व दातुमर्हसि मे सुतम् ॥ ४४ ॥
तस्या प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रमनुत्तमम् ।
ब्रह्मदत्त इति ख्यात मानस चूलिन सुतम् ॥ ४५ ॥
स राजा ब्रह्मदत्तस्तु पुरीमध्यवसत्तदा ।
काम्पिल्या परया लक्ष्म्या देवराजो यथा दिवम् ॥ ४६ ॥
स बुद्धि कृतवाच्राजा कुशनाभ सुधार्मिक ।
ब्रह्मदत्ताय काकुत्स्थ दातु कन्याशत तदा ॥ ४७ ॥
तमाहूय महातेजा ब्रह्मदत्त महीपतिम् ।
ददौ कन्याशत तस्मै सुप्रीतेनान्तरात्मना ॥ ४८ ॥
यथाक्रम तथा पाणिं जग्राह रघुनन्दन ।
ब्रह्मदत्तो महीपालस्तासा देवपतिर्यथा ॥ ४९ ॥
स्पृष्टमात्रे तदा पाणौ विकुब्जा विगतज्वरा ।
युक्त परमया लक्ष्म्या बभौ कन्याशत तदा ॥ ५० ॥
स दृष्ट्वा वायुना मुक्ता कुशनाभो महीपति ।
बभूव परमप्रीतो हर्ष लेभे पुन पुन ॥ ५१ ॥
कृतोद्वाह तु राजान ब्रह्मदत्त महीपति ।
सदार प्रेषयामास स्वपुरं परमार्चितम् ॥ ५२ ॥
यथान्यायं च गन्धर्वी स्नुषास्ता प्रत्यनन्दत ।
स्पृष्ट्वा स्पृष्ट्वा च ता कन्या कुशनाभ प्रशस्य च ॥ ५३ ॥
इति बालकाण्डे ब्रह्मदत्तविवाहो नाम चतुस्त्रिंशः सर्ग ॥ ३४ ॥

---

कृतोद्वाहे गते तस्मिन्ब्रह्मदत्ते नराधिपे ।
अपुत्र कुशनाभोथ पौत्रीमिष्टिमकल्पयत् ॥ १ ॥
इष्ट्या तु वर्तमानाया कुशनाभ महीपतिम् ।
उवाच परमोदारो कुशो ब्रह्मसुतस्तदा ॥ २ ॥

पुत्रस्ते सदृशः पुत्र भविष्यति सुधार्मिकः ।
गाधिः प्राप्स्यसि येन त्वं कीर्तिं लोकेषु शाश्वतीम् ॥ ३ ॥
एवमुक्त्वा कुशो राम कुशनाभं महीपतिम् ।
जगामाकाशमाविश्य ब्रह्मलोकं सनातनम् ॥ ४ ॥
कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः ।
जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः ॥ ५ ॥
स पिता मम धर्मात्मा गाधिः सत्यपराक्रमः ।
कुशवंशप्रसूतोस्मि गाधिजो रघुनन्दन ॥ ६ ॥
पूर्वजा भगिनी चापि मम राघव सुव्रता ।
नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७ ॥
सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी ।
कौशिकी परमोदारा सा प्रवृत्ता महानदी ॥ ८ ॥
दिव्या पुण्योदका रम्या हिमवन्तमुपाश्रिता ।
लोकस्य हितकामार्थं प्रवृत्ता भगिनी मम ॥ ९ ॥
ततोहं हिमवत्पार्श्वे वसामि नियतः सुखम् ।
भगिन्या स्नेहसंयुक्तः कौशिक्या रघुनन्दन ॥ १० ॥
सा तु सत्यवती पुण्या सत्यधर्मे प्रतिष्ठिता ।
पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११ ॥
अहं हि नियमाद्राम हित्वा तां समुपागतः ।
सिद्धाश्रममनुप्राप्य सिद्धोस्मि तव तेजसा ॥ १२ ॥
एषा राम ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता ।
देशस्य च महाबाहो यन्मां त्वं परिपृच्छसि ॥ १३ ॥
गतोर्धरात्रः काकुत्स्थ कथाः कथयतो मम ।
निद्रामभ्येहि भद्रं ते मा भूद्विघ्नोध्वनीह नः ॥ १४ ॥
निष्पन्दास्तरवः सर्वे निलीना मृगपक्षिणः ।
नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ॥ १५ ॥
शनैर्वियुज्यते संध्या नभो नेत्रैरिवावृतम् ।
नक्षत्रतारागहनं ज्योतिर्भिरवभासते ॥ १६ ॥

उत्तिष्ठते च शीतांशुः शशी लोकतमोनुदः ।
ह्लादयन्प्राणिनां लोके मनांसि प्रभया स्वया ॥ १७ ॥
नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः ।
यक्षराक्षससंघाश्च रौद्राश्च पिशिताशनाः ॥ १८ ॥
एवमुक्त्वा महातेजा विरराम महामुनिः ।
साधु साध्विति ते सर्वे मुनयो ह्यभ्यपूजयन् ॥ १९ ॥
कौशिकानामयं वंशो महान्धर्मपरः सदा ।
ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥ २० ॥
विशेषेण भवानेव विश्वामित्रो महायशाः ।
कौशिकी सरितां श्रेष्ठा कुलोद्योतकरी तव ॥ २१ ॥
इति तैर्मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः ।
निद्रामुपागमच्छ्रीमानस्तं गत इवांशुमान् ॥ २२ ॥
रामोपि सहसौमित्रिः किंचिदागतविस्मयः ।
प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३ ॥
इति बालकाण्डे विश्वामित्रवंशकीर्तनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

उपास्य रात्रिशेषं तु शोणकूले महर्षिभिः ।
निशायां सुप्रभातायां विश्वामित्रोभ्यभाषत ॥ १ ॥
सुप्रभाता निशा राम पूर्वा संध्या प्रवर्तते ।
उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥ २ ॥
तच्छ्रुत्वा वचनं तस्य कृत्वा पौर्वाह्णिकीं क्रियाम् ।
गमनं रोचयामास वाक्यं चेदमुवाच ह ॥ ३ ॥
अयं शोणः शुभजलोगाधः पुलिनमण्डितः ।
कतरेण पथा ब्रह्मन्संतरिष्यामहे वयम् ॥ ४ ॥
एवमुक्तस्तु रामेण विश्वामित्रोब्रवीदिदम् ।
एष पन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥ ५ ॥
ते गत्वा दूरमध्वानं गतेर्धदिवसे तदा ।
जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ६ ॥

तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् ।
बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥ ७ ॥
तस्यास्तीरे तदा सर्वे चक्रुर्वासपरिग्रहम् ।
ततः स्नात्वा यथान्यायं संतर्प्य पितृदेवताः ॥ ८ ॥
हुत्वा चैवाग्निहोत्राणि प्राश्य चामृतवद्धविः ।
विविशुर्जाह्नवीतीरे शुभा मुदितमानसाः ॥ ९ ॥
विश्वामित्रं महात्मानं परिवार्य समन्ततः ।
निष्ठितास्ते यथान्यायं राघवौ च यथार्हतः ॥ १० ॥
संप्रहृष्टमना रामो विश्वामित्रमथाब्रवीत् ।
भगवञ्छ्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम् ॥ ११ ॥
चोदितो रामवाक्येन विश्वामित्रो महामुनिः ।
वृद्धिं जन्म च गङ्गाया वक्तुमेवोपचक्रमे ॥ १२ ॥
शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान् ।
तस्य कन्याद्वयं जातं रूपेणाप्रतिमं भुवि ॥ १३ ॥
या मेरुदुहिता राम तयोर्माता सुमध्यमा ।
नाम्ना मेना मनोज्ञा वै पत्नी हिमवतः प्रिया ॥ १४ ॥
तस्यां गङ्गेयमभवज्ज्येष्ठा हिमवतः सुता ।
उमा नाम द्वितीयाभूत्कन्या तस्यैव राघव ॥ १५ ॥
अथ ज्येष्ठां सुराः सर्वे देवकार्यचिकीर्षया ।
शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम् ॥ १६ ॥
ददौ धर्मेण हिमवांस्तनयां लोकपावनीम् ।
स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥ १७ ॥
प्रतिगृह्य च गङ्गां ते त्रैलोक्यपथचारिणीम् ।
यथागतं ययुर्देवाः कृतार्थेनान्तरात्मना ॥ १८ ॥
या चान्या शैलदुहिता कन्यासीद्रघुनन्दन ।
उग्रं सा व्रतमास्थाय तपस्तेपे तपोधना ॥ १९ ॥
उग्रेण तपसा युक्तां ददौ शैलवरः सुताम् ।
रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥ २० ॥

इत्येते शैलराजस्य सुते राम बभूवतुः ।
गङ्गा च सरितां श्रेष्ठा देवीना चाप्युमा वरा ॥ २१ ॥
सैषा सुरनदी रम्या शैलेन्द्रस्य सुता तदा ।
सुरलोकं समारूढा विपापा जलवाहिनी ॥ २२ ॥

इति बालकाण्डे गङ्गोत्पत्तिर्नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

---

उक्तवाक्ये मुनौ तस्मिन्नुभौ राघवलक्ष्मणौ ।
प्रतिनन्द्य कथां वीरावूचतुर्मुनिपुंगवम् ॥ १ ॥
धर्मयुक्तमिदं ब्रह्मन्कथितं परमं त्वया ।
दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि ॥ २ ॥
त्रीन्पथो हेतुना केन प्लावयेल्लोकपावनी ।
त्रिषु लोकेषु धर्मज्ञ कर्मभिः कैः समन्विता ॥ ३ ॥
तथा ब्रुवति काकुत्स्थे विश्वामित्रस्तपोधनः ।
निखिलेन कथां सर्वामृषिमध्ये न्यवेदयत ॥ ४ ॥
पुरा राम कृतोद्वाहः शितिकण्ठो महातपाः ।
उमा च स्पर्धया देवी मैथुनायोपचक्रतुः ॥ ५ ॥
तस्य संक्रीडमानस्य महादेवस्य धीमतः ।
शितिकण्ठस्य देव्याश्च दिव्यं वर्षशतं गतम् ॥ ६ ॥
एवं मन्मथयुद्धे तु तयोर्नासीत्पराजयः ।
न चापि तनयो राम तस्यामासीत्परंतप ॥ ७ ॥
ततो देवाः समुद्विग्नाः पितामहपुरोगमाः ।
यदिहोत्पद्यते भूतं कस्तत्प्रतिसहिष्यते ॥ ८ ॥
तेऽभिगम्य सुराः सर्वे प्रणिपत्य वृषभध्वजम् ।
शितिकण्ठं महात्मानमिदं वचनमब्रुवन् ॥ ९ ॥
देवदेव महाभाग सर्वभूतहिते रत ।
सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि ॥ १० ॥
न लोका धारयिष्यन्ति तव तेजः सुरोत्तम ।
ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ॥ ११

त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय ।
रक्ष सर्वानिमाँल्लोकान्नालोकं कर्तुमर्हसि ॥ १२ ॥
देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः ।
बाढमित्यब्रवीत्सर्वान्पुनश्चेदमुवाच ह ॥ १३ ॥
धारयिष्याम्यहं तेजस्तेजस्येव सहोमया ।
त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु ॥ १४ ॥
यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम् ।
धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः ॥ १५ ॥
एवमुक्तास्ततो देवाः प्रत्यूचुर्वृषभध्वजम् ।
यत्तेजः क्षुभितं ह्यद्य तद्धरा धारयिष्यति ॥ १६ ॥
एवमुक्तः सुरपतिः प्रमुमोच महीतले ।
तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥ १७ ॥
ततो देवाः पुनरिदमूचुश्चापि हुताशनम् ।
आविश त्वं महातेजो रौद्रं वायुसमन्वितः ॥ १८ ॥
तदग्निना पुनर्व्याप्तं तज्जातः श्वेतपर्वतः ।
दिव्यं शरवणं चैव पावकादित्यसंनिभम् ।
यत्र जातो महातेजाः कार्तिकेयोऽग्निसंभवः ॥ १९ ॥
अथोमा च शिवं चैव देवा ऋषिगणास्तथा ।
पूजयामासुरत्यर्थं सुप्रीतमनसस्ततः ॥ २० ॥
अथ शैलसुता राम त्रिदशानभिवीक्ष्य तान् ।
समन्युरशपत्सर्वान्क्रोधसंरक्तलोचना ॥ २१ ॥
यस्मान्निवारिता चाहं संगता पुत्रकाम्यया ।
अद्यप्रभृति युष्माकमप्रजाः सन्तु पत्नयः ॥ २२ ॥
एवमुक्त्वा सुरान्सर्वाञ्शशाप पृथिवीमपि ।
अवने नैकरूपा त्वं बहुभार्या भविष्यसि ॥ २३ ॥
न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता ।
प्राप्स्यसि त्वं सुदुर्मेधो मम पुत्रमनिच्छती ॥ २४ ॥

तान्सर्वान्व्रीडितान्दृष्ट्वा सुरान्सुरपतिस्तदा ।
गमनायोपचक्राम दिशं वरुणपालिताम् ॥ २५ ॥
स गत्वा तप आतिष्ठत्पार्श्वे तस्योत्तरे गिरेः ।
हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ॥ २६ ॥
एष ते विस्तरो राम शैलपुत्र्या निवेदितः ।
गङ्गायाः प्रभवं चैव शृणु मे सहलक्ष्मण ॥ २७ ॥

इति बालकाण्डे उमामाहात्म्यं नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

तपस्तप्यति देवेशे त्र्यम्बके विबुधास्ततः ।
सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥ १ ॥
अब्रुवंश्च सुराः सर्वे भगवन्तं पितामहम् ।
प्रणिपत्य शुभं वाक्यं सेन्द्राः साग्निपुरोगमाः ॥ २ ॥
यो नः सेनापतिर्देव दत्तो भगवता पुरा ।
स तपः परमास्थाय तप्यते स्म सहोमया ॥ ३ ॥
यदत्रानन्तरं कार्यं लोकानां हितकाम्यया ।
संविधत्स्व विधानज्ञ त्वं हि नः परमा गतिः ॥ ४ ॥
देवतानां वचः श्रुत्वा सर्वलोकपितामहः ।
सान्त्वयन्मधुरैर्वाक्यैस्त्रिदशानिदमब्रवीत् ॥ ५ ॥
शैलपुत्र्या यदुक्तं तन्न प्रजास्यथ पत्निषु ।
तस्या वचनमक्लिष्टं सत्यमेव न संशयः ॥ ६ ॥
इयमाकाशगा गङ्गा यस्यां पुत्रं हुताशनः ।
जनयिष्यति देवानां सेनापतिमरिंदमम् ॥ ७ ॥
ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तं सुतम् ।
उमायास्तद्बहुमतं भविष्यति न संशयः ॥ ८ ॥
तच्छ्रुत्वा वचनं तस्य कृतार्था रघुनन्दन ।
प्रणिपत्य सुराः सर्वे पितामहमपूजयन् ॥ ९ ॥
ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् ।
अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ १० ॥

देवकार्यमिदं देव समाधत्स्व हुताशन ।
शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥ ११ ॥
देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः ।
गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥ १२ ॥
इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् ।
स तस्या महिमां दृष्ट्वा समन्तादवकीर्यत ॥ १३ ॥
समन्ततस्तु तां देवीमभ्यषिञ्चत पावकः ।
सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥ १४ ॥
तमुवाच ततो गङ्गा सर्वदेवपुरोहितम् ।
अशक्ता धारणे देव तेजस्तव समुद्धतम् ।
दह्यमानाग्निना तेन संप्रव्यथितचेतना ॥ १५ ॥
अथाब्रवीदिदं गङ्गां सर्वदेवहुताशनः ।
इह हैमवते पादे गर्भोयं संनिवेश्यताम् ॥ १६ ॥
श्रुत्वा त्वग्निवचो गङ्गा तं गर्भमतिभास्वरम् ।
उत्ससर्ज महत्तेजः स्रोतोभ्यो हि तदानघ ॥ १७ ॥
यदिदं निर्गतं तस्यास्तप्तजाम्बूनदप्रभम् ।
काञ्चनं धरणीं प्राप्तं हिरण्यममलत्तदा ॥ १८ ॥
ताम्रं कार्ष्णायसं चापि तैक्ष्ण्यादेवाभ्यजायत ।
मलं तस्याभवत्तत्र त्रपु सीसकमेव च ॥ १९ ॥
निक्षिप्तमात्रे गर्भे तु तेजोभिरभिरञ्जितम् ।
सर्वपर्वतसंनद्धं सौवर्णमभवद्वनम् ॥ २० ॥
जातरूपमिति ख्यातं तदाप्रभृति राघव
सौवर्णं प्रादुरभवद्धितेजोमयं शुचि ॥ २१ ॥
तं कुमारं ततो जातं दृष्ट्वा सेन्द्रा मरुद्गणाः ।
क्षीरसंभावनार्थाय कृत्तिकाः संन्ययोजयन् ॥ २२ ॥
ताः क्षीरं जातमात्रस्य कृत्वा समयमुत्तमम् ।
ददुः पुत्रोयमस्माकं सर्वासामिति निश्चिताः ॥ २३ ॥

ततस्तु देवताः सर्वाः कार्तिकेय इति ब्रुवन् ।
पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः ॥ २४ ॥
तेषां तद्वचनं श्रुत्वा स्कन्नं गर्भपरिस्रवे ।
स्नापयन्परया लक्ष्म्या दीप्यमानं यथानलम् ॥ २५ ॥
स्कन्द इत्यब्रुवन्देवाः स्कन्नं गर्भपरिस्रवे ।
कार्तिकेयं महाबाहुं काकुत्स्थ ज्वलनोपमम् ॥ २६ ॥
प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् ।
षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ॥ २७ ॥
गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा ।
अजयत्स्वेन वीर्येण दैत्यसैन्यगणान्विभुः ॥ २८ ॥
सुरसेनागणपतिमभ्यषिञ्चन्महाद्युतिम् ।
ततस्तममराः सर्वे समेत्याग्निपुरोगमाः ॥ २९ ॥
एष ते राम गङ्गाया विस्तरोऽभिहितो मया ।
कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च ॥ ३० ॥

इति बालकाण्डे कुमारोत्पत्तिर्नाम अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

तां तथा कौशिको रामे निवेद्य मधुरां कथाम् ।
पुनरेवापरं वाक्यं काकुत्स्थमिदमब्रवीत् ॥ १ ॥
अयोध्याधिपतिर्वीर पूर्वमासीन्नराधिपः ।
सगरो नाम धर्मात्मा प्रजाकामः स चाप्रजाः ॥ २ ॥
विदर्भराजदुहिता केशिनी नाम नामतः ।
ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥ ३ ॥
अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ।
द्वितीया सगरस्यासीत्पत्नी सुमतिसंज्ञिता ॥ ४ ॥
ताभ्यां सह महाराजः पत्नीभ्यां तप्तवांस्तपः ।
हिमवन्तं समाश्रित्य भृगुप्रस्रवणे गिरौ ॥ ५ ॥
अथ वर्षशते पूर्णे तपसाराधितो मुनिः ।
सगराय वरं प्रादाद्भृगुः सत्यवतां वरः ॥ ६ ॥

अपत्यलाभः सुमहान्भविष्यति तवानघ ।
कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ ॥ ७ ॥
एका जनयिता तात पुत्रं वंशकरं तव ।
षष्टिं पुत्रसहस्राणि अपरा जनयिष्यति ॥ ८ ॥
भाषमाणं नरव्याघ्रं राजपुत्र्यौ प्रसाद्य तम् ।
ऊचतुः परमप्रीते कृताञ्जलिपुटे तदा ॥ ९ ॥
एकः कस्याः सुतो ब्रह्मन्का बहूञ्जनयिष्यति ।
श्रोतुमिच्छावहे सम्यक्सत्यमस्तु वचस्तव ॥ १० ॥
तयोस्तद्वचनं श्रुत्वा भृगुः परमधार्मिकः ।
उवाच मधुरां वाणीं स्वच्छन्दोऽत्र विधीयताम् ॥ ११ ॥
एको वंशकरो वास्तु बहवो वा महाबलाः ।
कीर्तिमन्तो महोत्साहाः का वा कं वरमिच्छति ॥ १२ ॥
मुनेस्तु वचनं श्रुत्वा केशिनी रघुनन्दन ।
पुत्रं वंशकरं राम जग्राह नृपसंनिधौ ॥ १३ ॥
षष्टिं पुत्रसहस्राणि सुपर्णभगिनी तदा ।
महोत्साहान्कीर्तिमतो जग्राह सुमतिः सुतान् ॥ १४ ॥
प्रदक्षिणामृषिं कृत्वा शिरसाभिप्रणम्य तम् ।
जगाम स्वपुरं राजा सभार्यो रघुनन्दन ॥ १५ ॥
अथ काले गते तस्य ज्येष्ठा पुत्रं व्यजायत ।
असमञ्ज इति ख्यातं केशिनी सगरात्मजम् ॥ १६ ॥
सुमतिस्तु नरव्याघ्र गर्भं तुम्बं व्यजायत ।
षष्टिः पुत्रसहस्राणि तुम्बभेदाद्विनिःसृताः ॥ १७ ॥
घृतपूर्णेषु कुम्भेषु धात्र्यस्तान्समवर्धयन् ।
ते च कालेन महता यौवनं प्रतिपेदिरे ॥ १८ ॥
समानवयसः सर्वे तुल्यवीर्यपराक्रमाः ।
षष्टिः पुत्रसहस्राणि सगरस्याभवंस्तदा ॥ १९ ॥
स च ज्येष्ठो नरश्रेष्ठ सगरस्यात्मसंभवः ।
स राज्यस्योऽभवच्चेषामसमञ्जः परंतपः ॥ २० ॥

बालान्गृहीत्वा तु जले सरय्वा रघुनन्दन ।
प्रक्षिप्य प्राहसन्नित्यं मज्जतस्तान्समीक्ष्य वै ॥ २१ ॥
एवं पापसमाचारः सज्जनप्रतिबाधकः ।
पौराणामहिते युक्तः पित्रा निर्वासितः पुरात् ॥ २२ ॥
तस्य पुत्रोंशुमान्नाम असमञ्जस्य वीर्यवान् ।
संमतः सर्वलोकस्य सर्वस्यापि प्रियंवदः ॥ २३ ॥
ततः कालेन महता मतिः समभिजायत ।
सगरस्याश्वमेधेन यजेयमिति राघव ॥ २४ ॥
स कृत्वा निश्चयं राजा सोपाध्यायगणस्तदा ।
यज्ञकर्मणि वेदज्ञो यष्टुं समुपचक्रमे ॥ २५ ॥

इति बालकाण्डे सगरपुत्रजन्म नाम एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

विश्वामित्रवचः श्रुत्वा कथान्ते रघुनन्दनः ।
उवाच परमप्रीतो मुनिं दीप्तमिवानलम् ॥ १ ॥
श्रोतुमिच्छामि भद्रं ते विस्तरेण कथामिमाम् ।
पूर्वजो मे कथं ब्रह्मन्यज्ञं वै समुपाहरत् ॥ २ ॥
विश्वामित्रस्तु काकुत्स्थमुवाच प्रहसन्निव ।
श्रूयतां विस्तरो राम सगरस्य महात्मनः ॥ ३ ॥
शंकरश्वशुरः श्रीमान्हिमवानचलोत्तमः ।
विन्ध्यश्च स्पर्धयान्योन्यं यत्र देशे निरीक्षतः ॥ ४ ॥
तयोर्मध्ये प्रवृत्तोभूत्स यज्ञः पुरुषोत्तम ।
स हि देशो महापुण्यः प्रशस्तो यज्ञकर्मणि ॥ ५ ॥
तस्याश्वचर्यां काकुत्स्थ दृढधन्वा महारथः ।
अंशुमानकरोत्तात सगरस्य मते स्थितः ॥ ६ ॥
तस्य पर्वणि तं यज्ञं यजमानस्य वासवः ।
राक्षसीं तनुमास्थाय यज्ञियाश्वमपाहरत् ॥ ७ ॥
ह्रियमाणे तु काकुत्स्थ तस्मिन्नश्वे महात्मनः ।
उपाध्यायगणाः सर्वे यजमानमथाब्रुवन् ॥ ८ ॥

अयं पर्वणि वेगेन यज्ञियाश्वोपनीयते ।
हत्वा तमश्वहर्तारं तमेवाश्वं समानय ॥ ९ ॥
यज्ञच्छिद्रं भवत्येतत्सर्वेषामशिवाय नः ।
तत्तथा क्रियतां राजन्यथाच्छिद्रः क्रतुर्भवेत् ॥ १० ॥
उपाध्यायवचः श्रुत्वा तस्मिन्सदसि पार्थिवः ।
षष्टिं पुत्रसहस्राणि समाहूयेदमब्रवीत् ॥ ११ ॥
गतिं पुत्रा न पश्यामि रक्षसां पुरुषर्षभाः ।
मन्त्रपूतैर्महाभागैरास्थितो हि महाक्रतुः ॥ १२ ॥
योऽसौ रसातलगतो यदि वान्तर्जले स्थितः ।
तं हत्वानयताश्वं मे पुत्रका भद्रमस्तु वः ॥ १३ ॥
समुद्रमालिनीं कृत्स्नां पृथिवीमनुगच्छत ।
मोत्खनध्वं प्रयत्नेन यावत्तुरगदर्शनम् ॥ १४ ॥
एकैकं योजनं भूमिर्निर्भिन्दन्तोनुगच्छत ।
अस्माकमश्वहर्तारं मार्गमाणा ममाज्ञया ॥ १५ ॥
दीक्षितः पौत्रसहितः सोपाध्यायगणस्त्वहम् ।
इह स्थास्यामि भद्रं वो यावत्तुरगदर्शनम् ॥ १६ ॥
ते सर्वे हृष्टमनसो राजपुत्रा महाबलाः ।
जग्मुर्महीतलं राम पितुर्वचनयन्त्रिताः ॥ १७ ॥
योजनायामविस्तारमेकैको धरणीतलम् ।
बिभिदुः पुरुषव्याघ्रा वज्रस्पर्शसमैर्भुजैः ॥ १८ ॥
शूलैरशनिकल्पैश्च हलैश्चापि सुदारुणैः ।
भिद्यमाना वसुमती तैस्तैरेव ननाद सा ॥ १९ ॥
नागानां वध्यमानानामसुराणां च राघव ।
राक्षसानां च दुर्धर्षः सत्त्वानां निनदोभवत् ॥ २० ॥
योजनानां सहस्राणि षष्टिं तु रघुनन्दन ।
बिभिदुर्धरणीं क्रुद्धाः सर्वे यावद्रसातलम् ॥ २१ ॥
एवं पर्वतसंबाधं जम्बुद्वीपं नृपात्मजाः ।
खनन्तो नृपशार्दूल सर्वतः परिचक्रमुः ॥ २२ ॥

ततो देवाः सगन्धर्वाः सासुराः सहपन्नगाः।
संभ्रान्तमनसः सर्वे पितामहमुपागमन्॥ २३॥
ते प्रसाद्य महात्मानं विषण्णवदनास्तदा।
ऊचुः परमसंत्रस्ताः पितामहमिदं वचः॥ २४॥
भगवन्पृथिवी सर्वा खन्यते सगरात्मजैः।
खनद्भिश्चैव तैर्ब्रह्मन्महासत्त्ववधः कृतः॥ २५॥
अयं यज्ञहरोऽस्माकमनेनाश्वोपनीयते।
इति ते सर्वभूतानि निघ्नन्ति सगरात्मजाः॥ २६॥
इति बालकाण्डे पृथिवीविदारणं नाम चत्वारिंशः सर्गः॥४०॥

---

देवतानां वचः श्रुत्वा भगवान्वै पितामहः।
प्रत्युवाच सुसंत्रस्तान्कृतान्तबलमोहितान्॥ १॥
यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः।
महिषी माधवस्येष्टा स एव भगवान्प्रभुः॥ २॥
कापिलं रूपमास्थाय धारयत्यनिशं धराम्।
तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः॥ ३।
पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः।
सगरस्य च पुत्राणां विनाशो दीर्घदर्शिना॥ ४॥
पितामहवचः श्रुत्वा त्रयस्त्रिंशदरिंदम।
देवाः परमसंहृष्टाः पुनर्जग्मुर्यथागतम्॥ ५॥
सगरस्य च पुत्राणां प्रादुरासीन्महौजसाम्।
पृथिव्या भिद्यमानायां निर्घातसमनिःस्वनः॥ ६॥
ततो भित्त्वा महीं कृत्स्नां कृत्वा चापि प्रदक्षिणम्।
उपेत्य सागराः सर्वे पितरं वाक्यमब्रुवन्॥ ७॥
परिक्रान्ता मही सर्वा सत्त्ववन्तश्च सूदिताः।
देवदानवरक्षांसि पिशाचोरगपन्नगाः॥ ८॥
न च पश्यामहेऽश्वं ते अश्वहर्तारमेव च।
किं करिष्यामो भद्रं ते बुद्धिरत्र विचार्यताम्॥ ९॥

तेषां तद्वचनं श्रुत्वा पुत्राणां राजसत्तमः ।
समन्युरब्रवीद्वाक्यं सगरो रघुनन्दन ॥ १० ॥
भूयः खनत भद्रं वो निर्भिद्य वसुधातलम् ।
अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तत ॥ ११ ॥
पितुर्वचनमास्थाय सगरस्य महात्मनः ।
षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् ॥ १२ ॥
खन्यमाने ततस्तस्मिन्ददृशुः पर्वतोपमम् ।
दिशागजं विरूपाक्षं धारयन्तं महीतलम् ॥ १३ ॥
सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन ।
शिरसा धारयामास विरूपाक्षो महागजः ॥ १४ ॥
यदा पर्वणि काकुत्स्थ विश्रमार्थं महागजः ।
खेदाच्चालयते शीर्षं भूमिकम्पस्तदा भवेत् ॥ १५ ॥
तं ते प्रदक्षिणं कृत्वा दिशापालं महागजम् ।
मानयन्तो हि ते राम जग्मुर्भित्वा रसातलम् ॥ १६ ॥
ततः पूर्वां दिशं हित्वा दक्षिणां बिभिदुः पुनः ।
दक्षिणस्यामपि दिशि ददृशुस्ते गजोत्तमम् ॥ १७ ॥
महापद्मं महानागं तिष्ठन्तं पर्वतोपमम् ।
शिरसा धारयन्तं गां ते दृष्ट्वा विस्मयं गताः ॥ १८ ॥
ते तं प्रदक्षिणं कृत्वा सगरस्य महात्मनः ।
षष्टिः पुत्रसहस्राणि पश्चिमां बिभिदुर्दिशम् ॥ १९ ॥
पश्चिमायामपि दिशि महान्तमचलोपमम् ।
दिशागजं सौमनसं ददृशुस्ते महाबलाः ॥ २० ॥
ते तं प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् ।
खनन्तः समुपाक्रान्ता दिशं सोमवतीं तदा ॥ २१ ॥
उत्तरस्यां रघुश्रेष्ठ ददृशुर्हिमपाण्डुरम् ।
भद्रं भद्रेण वपुषा धारयन्तं महीमिमाम् ॥ २२ ॥
समालभ्य ततः सर्वे कृत्वा चैनं प्रदक्षिणम् ।
षष्टिः पुत्रसहस्राणि बिभिदुर्वसुधातलम् ॥ २३ ॥

ततः प्रागुत्तरां गत्वा सागराः प्रथितां दिशम् ।
रोषादभ्यखनन्सर्वे पृथिवीं सगरात्मजाः ॥ २४ ॥
ते तु सर्वे महात्मानो भीमवेगा महाबलाः ।
ददृशुः कपिलं तत्र वासुदेवं सनातनम् ॥ २५ ॥
हयं च तस्य देवस्य चरन्तमविदूरतः ।
प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन ॥ २६ ॥
ते तं हयहरं मत्वा क्रोधपर्याकुलेक्षणाः ।
अभ्यधावन्त संक्रुद्धास्तिष्ठ तिष्ठेति चाब्रुवन् ॥ २७ ॥
अस्माकं त्वं हि तुरगं यज्ञियं हृतवानसि ।
दुर्मेधस्त्वं हि संप्राप्तान्विद्धि नः सगरात्मजान् ॥ २८ ॥
श्रुत्वा तद्वचनं तेषां कपिलो रघुनन्दन ।
रोषेण महताविष्टो हुंकारमकरोत्तदा ॥ २९ ॥
ततस्तेनाप्रमेयेण कपिलेन महात्मना ।
भस्मराशीकृताः सर्वे काकुत्स्थ सगरात्मजाः ॥ ३० ॥
इति बालकाण्डे कपिलदर्शनं नाम एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

पुत्रांश्चिरगताञ्ज्ञात्वा सगरो रघुनन्दन ।
नप्तारमब्रवीद्राजा दीप्यमानं स्वतेजसा ॥ १ ॥
शूरश्च कृतविद्यश्च पूर्वैस्तुल्योसि तेजसा ।
पितॄणां गतिमन्विच्छ येन चाश्वोपहारितः ॥ २ ॥
अन्तर्भौमानि सत्त्वानि वीर्यवन्ति महान्ति च ।
तेषां त्वं प्रतिघातार्थं सासिं गृह्णीष्व कार्मुकम् ॥ ३ ॥
अभिवाद्याभिवाद्यांस्त्वं हत्वा विघ्नकरानपि ।
सिद्धार्थः संनिवर्तस्व मम यज्ञस्य पारगः ॥ ४ ॥
एवमुक्तोंशुमान्सम्यक्सगरेण महात्मना ।
धनुरादाय खड्गं च जगाम लघुविक्रमः ॥ ५ ॥
स खातं पितृभिर्मार्गमन्तर्भौमं महात्मभिः ।
प्रापद्यत नरश्रेष्ठ तेन राज्ञाभिचोदितः ॥ ६ ॥

देवदानवरक्षोभिः पिशाचपतगोरगैः ।
पूज्यमानं महातेजा दिशागजमपश्यत ॥ ७ ॥
स तं प्रदक्षिणं कृत्वा पृष्ट्वा चैव निरामयम् ।
पितॄंस्तान्परिपप्रच्छ वाजिहर्तारमेव च ॥ ८ ॥
दिशागजस्तु तच्छ्रुत्वा प्रत्युवाच महामतिम् ।
आसमञ्ज कृतार्थस्त्वं सहाश्वः शीघ्रमेष्यसि ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा सर्वानेव दिशागजान् ।
यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १० ॥
तैश्च सर्वैर्दिशापालैर्वाक्यज्ञैर्वाक्यकोविदः ।
पूजितः सहयश्चैव गन्तासीत्यभिचोदितः ॥ ११ ॥
तेषां तद्वचनं श्रुत्वा जगाम लघुविक्रमः ।
भस्मराशीकृता यत्र पितरस्तस्य सागराः ॥ १२ ॥
स दुःखवशमापन्नस्त्वसमञ्जसुतस्तदा ।
चुक्रोश परमार्तस्तु वधात्तेषां सुदुःखितः ॥ १३ ॥
यज्ञियं च हयं तत्र चरन्तमविदूरतः ।
ददर्श पुरुषव्याघ्रो दुःखशोकसमन्वितः ॥ १४ ॥
स तेषां राजपुत्राणां कर्तुकामो जलक्रियाम् ।
सलिलार्थी महातेजा न चापश्यज्जलाशयम् ॥ १५ ॥
विसार्य निपुणां दृष्टिं ततोऽपश्यत्खगाधिपम् ।
पितॄणां मातुलं राम सुपर्णमचलोपमम् ॥ १६ ॥
स चैनमब्रवीद्वाक्यं वैनतेयो महाबलः ।
मा शुचः पुरुषव्याघ्र वधोऽयं लोकसंमतः ॥ १७ ॥
कपिलेनाप्रमेयेण दग्धा हीमे महाबलाः ।
सलिलं नार्हसे प्राज्ञ दातुमेषां हि लौकिकम् ॥ १८ ॥
गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ ।
भस्मराशीकृतानेतान्प्लावयेल्लोकपावनी ॥ १९ ॥
तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया ।
षष्टिं पुत्रसहस्राणि स्वर्गलोकं नयिष्यति ॥ २० ॥

गङ्गामानय भद्रं ते देवलोकान्महीतलम् ।
क्रियतां यदि शक्तोऽपि गङ्गाया अवतारणम् ॥ २१ ॥
गच्छाश्वं तं समादाय पुनरेव यथागतम् ।
यज्ञं पैतामहं वीर संवर्तयितुमर्हसि ॥ २२ ॥
सुपर्णवचनं श्रुत्वा सोंऽशुमानतिवीर्यवान् ।
त्वरितं हयमादाय पुनरायान्महायशाः ॥ २३ ॥
स राजानं समासाद्य दीक्षितं रघुनन्दन ।
न्यवेदयद्यथावृत्तं सुपर्णवचनं तथा ॥ २४ ॥
तच्छ्रुत्वा घोरसंकाशं वाक्यमंशुमतो नृपः ।
यज्ञं निवर्तयामास यथाकल्पं यथाविधि ॥ २५ ॥
स्वपुरं त्वगमच्छ्रीमानिष्टयज्ञो महामतिः ।
गङ्गायाश्चागमे राजा निश्चयं नाध्यगच्छत ॥ २६ ॥
अगत्वा निश्चयं राजा कालेन महता महान् ।
त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः ॥ २७ ॥

**इति बालकाण्डे सगरयज्ञसमाप्तिर्नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥**

---

कालधर्मं गते राम सगरे प्रकृतीजनाः ।
राजानं रोचयामासुरंशुमन्तं सुधार्मिकम् ॥ १ ॥
स राजा सुमहानासीदंशुमान्रघुनन्दन ।
तस्य पुत्रः समभवद्दिलीप इति विश्रुतः ॥ २ ॥
तस्मै राज्यं समादिश्य अंशुमान्रघुनन्दन ।
हिमवच्छिखरे रम्ये तपस्तेपे सुदारुणम् ॥ ३ ॥
गङ्गावतरणं पुण्यं चिकीर्षुरमरद्युतिः ।
अनवाप्यैव तं कामं स वै नृपतिसत्तमः ॥ ४ ॥
द्वात्रिंशतं सहस्राणि वर्षाणां सुमहायशाः ।
तपोवनं गतो राजा स्वर्गं लेभे तपोधनः ॥ ५ ॥
दिलीपस्तु महातेजाः श्रुत्वा पैतामहं वधम् ।
दुःखोपहतया बुद्ध्या निश्चयं नाध्यगच्छत ॥ ६ ॥

कथं गङ्गावतरणं कथं तेषां जलक्रिया ।
तारयेयं कथं चैतानिति चिन्तापरोऽभवत् ॥ ७ ॥
तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः ।
पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ८ ॥
दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान् ।
त्रिंशद्वर्षसहस्राणि राजा राज्यमकारयत् ॥ ९ ॥
अगत्वा निश्चयं राजा तेषामुद्धरणं प्रति ।
व्याधिना नरशार्दूल कालधर्ममुपेयिवान् ॥ १० ॥
इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा ।
राज्ये भगीरथं पुत्रमभिषिच्य नरर्षभः ॥ ११ ॥
भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन ।
अनपत्यो महातेजा प्रजाकामः स चाप्रजाः ॥ १२ ॥
मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः ।
स तपो दीर्घमातिष्ठद्गोकर्णे रघुनन्दन ॥ १३ ॥
ऊर्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः ।
जलशायी च हेमन्ते वर्षास्वभ्रावकाशिकः ॥ १४ ॥
तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ।
सुप्रीतो भगवान्ब्रह्मा प्रजानां प्रभुरीश्वरः ॥ १५ ॥
ततः सुरगणैः सार्धमुपागम्य पितामहः ।
भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥ १६ ॥
भगीरथ महाभाग प्रीतस्तेऽहं जनेश्वर ।
तपसा च सुतप्तेन वरं वरय सुव्रत ॥ १७ ॥
तमुवाच महातेजाः सर्वलोकपितामहम् ।
भगीरथो महाबाहुः कृताञ्जलिपुटः स्थितः ॥ १८ ॥
यदि मे भगवान्प्रीतो यद्यस्ति तपसः फलम् ।
सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥ १९ ॥
गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।
स्वर्गं गच्छेयुरत्यन्तं सर्वे ते प्रपितामहाः ॥ २० ॥

देया च सन्ततिर्देव नावसीदेत्कुलं च नः ।
इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥ २१ ॥
उक्तवाक्यं च राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥ २२ ॥
मनोरथो महानेष भगीरथ महारथ ।
एवं भवतु भद्रं ते इक्ष्वाकुकुलवर्धन ॥ २३ ॥
इयं हैमवती ज्येष्ठा गङ्गा हिमवतः सुता ।
तां वै धारयितुं राजञ्शिवो देवः प्रसाद्यताम् ॥ २४ ॥
गङ्गायाः पतनं वीर पृथिवी न सहिष्यते ।
तस्या धारयितारं च नान्यं पश्यामि शूलिनः ॥ २५ ॥
तमेवमुक्त्वा राजानं गङ्गामाभाष्य लोककृत् ।
जगाम त्रिदिवं देवैः सर्वैः सहमरुद्गणैः ॥ २६ ॥

इति बालकाण्डे भगीरथवरप्रदानं नाम त्रिचत्वारिंशः सर्गः ॥ ४३॥

---

प्रजापतौ गते तस्मिन्सोऽङ्गुष्ठाग्रनिपीडिताम् ।
कृत्वा महीतलं राजा संवत्सरमुपासत ॥ १ ॥
ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः ।
अचलः स्थाणुवत्स्थित्वा रात्रिंदिवमतन्द्रितः ॥ २ ॥
अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ।
उमापतिः पशुपतिर्भगीरथमभाषत ॥ ३ ॥
प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ।
शिरसा धारयिष्यामि शैलराजसुतामहम् ॥ ४ ॥
ततो हिमवतः शृङ्गमभिरुह्य महेश्वरः ।
निपतेत्यब्रवीद्गङ्गामाभाष्याकाशगां नदीम् ॥ ५ ॥
ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता ।
उमापतेर्वचः श्रुत्वा गङ्गा क्रोधसमन्विता ॥ ६ ॥
तदा सातिमहद्रूपं कृत्वा वेगं च दुःसहम् ।
आकाशादपतद्गङ्गा शिवे शिवशिरस्युत ॥ ७ ॥

अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ।
विशाम्यहं हि पातालं स्रोतसा गृह्य शंकरम् ॥ ८ ॥
तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान्हरः ।
तिरोभावयितुं बुद्धिं चक्रे त्रिनयनस्तदा ॥ ९ ॥
सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ।
हिमवत्प्रतिमे राम जटामण्डलगह्वरे ॥ १० ॥
सा कथंचिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता ।
नैव सा निर्गमं लेभे जटामण्डलमोहिता ॥ ११ ॥
तत्रैवाबम्भ्रमद्देवी संवत्सरगणान्बहून् ।
तामपश्यत्पुनस्तत्र तपः परममास्थितः ॥ १२ ॥
स तेन तोषितश्चाभूदत्यर्थं रघुनन्दन ।
विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ॥ १३ ॥
तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ।
ह्लादिनी पावनी चैव नलिनी च तथापरा ।
तिस्रः प्राचीं दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः ॥ १४ ॥
सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ।
तिस्रश्चैता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ।
सप्तमी चान्वगात्तासां भगीरथमथो नृपम् ॥ १५ ॥
गगनाच्छंकरशिरस्ततो धरणिमागता ।
व्यसर्पत जलं तत्र तीव्रशब्दपुरस्कृतम् ॥ १६ ॥
मत्स्यकच्छपसंघैश्च शिशुमारगणैस्तथा ।
पतद्भिः पतितैश्चैव व्यरोचत वसुंधरा ॥ १७ ॥
ततो देवर्षिगन्धर्वा यक्षसिद्धगणास्तथा ।
व्यलोकयन्त ते तत्र गगनाद्गां गतां तदा ॥ १८ ॥
विमानैर्नगराकारैर्हयैर्गजवरैस्तथा ।
पारिप्लवगताश्चापि देवतास्तत्र विष्ठिताः ॥ १९ ॥
तदद्भुतमिदं लोके गङ्गावतारमुत्तमम् ।
दिदृक्षवो देवगणाः समीयुरमितौजसः ॥ २० ॥

संपतद्भिः सुरगणैस्तेषां चाभरणौजसा ।
शतादित्यमिवाभाति गगनं गततोयदम् ॥ २१ ॥
शिशुमारोरगगणैर्मीनैरपि च चञ्चलैः ।
विद्युद्भिरिव विक्षिप्तैराकाशमभवद्वृतम् ॥ २२ ॥
पाण्डुरैः सलिलोत्पीडैः कीर्यमाणैः सहस्रधा ।
शारदाभ्रैरिवाकीर्णं गगनं हंससंप्लवैः ॥ २३ ॥
क्वचिद्द्रुततरं याति कुटिलं क्वचिदागतम् ।
विततं क्वचिदुद्भूतं क्वचिद्याति शनैः शनैः ॥ २४ ॥
सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः ।
मुहुरूर्ध्वपथं गत्वा पपात वसुधां ततः ॥ २५ ॥
तच्छंकरशिरोभ्रष्टं भ्रष्टं भूमितले पुनः ।
व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ॥ २६ ॥
तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ २७ ॥
शापात्प्रपतिता ये च गगनाद्वसुधातलम् ।
पूतात्मानः पुनस्तेन सलिलेन दिवं गताः ॥ २८ ॥
मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ।
कृताभिषेको गङ्गायां बभूव मृतकल्मषः ॥ २९ ॥
भगीरथो हि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोन्वगात् ॥ ३० ॥
देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ।
गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ ३१ ॥
सर्वाश्चाप्सरसो राम भगीरथरथानुगाः ।
गङ्गामन्वगमन्प्रीताः सर्वे जलचराश्च ये ॥ ३२ ॥
यतो भगीरथो राजा ततो गङ्गा यशस्विनी ।
जगाम सरितां श्रेष्ठा सर्वपापप्रणाशिनी ॥ ३३ ॥
ततो हि यजमानस्य जह्नोरद्भुतकर्मणः ।
गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ॥ ३४ ॥

तस्यावलेपनं ज्ञात्वा क्रुद्धो जह्नुश्च राघव ।
अपिबत्तु जलं सर्वं गङ्गायाः परमाद्भुतम् ॥ ३५ ॥
ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः ।
पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ॥ ३६ ॥
गङ्गां चापि नयन्ति स्म दुहितृत्वे महात्मनः ।
ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत्पुनः ॥ ३७ ॥
तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ।
जगाम च पुनर्गङ्गा भगीरथरथानुगा ॥ ३८ ॥
सागरं चापि संप्राप्ता सा सरित्प्रवरा तदा ।
रसातलमुपागच्छत्सिद्ध्यर्थं तस्य कर्मणः ॥ ३९ ॥
स गत्वा सागरं राजा गङ्गयानुगतस्तदा ।
प्रविवेश तलं भूमेः खातं यत्सगरात्मजैः ॥ ४० ॥
उपनीय ततो गङ्गां रसातलतलं प्रभुः ।
तर्पयामास तान्सर्वान्भस्मभूतान्पितामहान् ॥ ४१ ॥
अथ गङ्गाम्भसा तत्र प्लाविताः सगरात्मजाः ।
दिव्यमूर्तिधरा भूत्वा जग्मुः स्वर्गं मुदान्विताः ॥ ४२ ॥
तान्दृष्ट्वा प्लावितान्सर्वान्पितॄंस्तेन महात्मना ।
भगीरथमुवाचेदं ब्रह्मा सुरगणैः सह ॥ ४३ ॥
तारिता नरशार्दूल दिवं याताश्च देववत् ।
षष्टिः पुत्रसहस्राणि सगरस्य महात्मना ॥ ४४ ॥
सागरस्य जलं लोके यावत्स्थास्यति पार्थिव ।
सगरस्यात्मजाः सर्वे दिवि स्थास्यन्ति देववत् ॥ ४५ ॥
इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति ।
त्वत्कृतेन च नाम्ना वै लोके स्थास्यति विश्रुता ॥ ४६ ॥
गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च ।
त्रीन्पथो भावयन्तीति ततस्त्रिपथगा स्मृता ॥ ४७ ॥
पितामहानां सर्वेषां त्वमत्र मनुजाधिप ।
कुरुष्व सलिलं राजन्प्रतिज्ञामपवर्जय ॥ ४८ ॥

पूर्वकेण हि ते राजंस्तेनातियशसा तदा ।
धर्मिणां प्रवरेणापि नैव प्राप्तो मनोरथः ॥ ४९ ॥
तथैवांशुमता वत्स लोकेऽप्रतिमतेजसा ।
गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥ ५० ॥
राजर्षिणा गुणवता महर्षिसमतेजसा ।
अतुल्यतपसा चैव क्षत्रधर्मे स्थितेन च ॥ ५१ ॥
दिलीपेन महाभाग तव पित्रातितेजसा ।
पुनर्न शकिता नेतुं गङ्गा प्रार्थयतानघ ॥ ५२ ॥
सा तु त्वया समाक्रान्ता प्रतिज्ञा पुरुषर्षभ ।
प्राप्तोऽसि परमं लोके यशस्त्रिदशसंमतम् ॥ ५३ ॥
तच्च गङ्गावतरणं त्वया कृतमरिंदम ।
अनेन च भवान्प्राप्तो धर्मस्यायतनं महत् ॥ ५४ ॥
प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते ।
सलिले पुरुषव्याघ्र शुचिः पुण्यफलो भव ॥ ५५ ॥
पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् ।
स्वस्ति तेऽस्तु गमिष्यामि स्वर्लोकं गम्यतां नृप ॥ ५६ ॥
इत्युक्त्वा भगवान्ब्रह्मा भगीरथमरिंदमम् ।
जगाम सहितो देवैर्ब्रह्मलोकमनामयम् ॥ ५७ ॥
भगीरथोऽपि राजर्षिः कृत्वा सलिलमुत्तमम् ।
यथाक्रमं यथान्यायं सागराणां महायशाः ॥ ५८ ॥
कृतोदकः शुची राजा स्वपुरं पुनरागमत् ।
समृद्धार्थो नरश्रेष्ठः स्वराज्यं प्रशशास ह ॥ ५९ ॥
प्रमुमोद च लोकस्तं नृपमासाद्य राघव ।
नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ॥ ६० ॥
एष ते राम गङ्गाया विस्तरोऽभिहितो मया ।
स्वस्ति प्राप्नुहि भद्रं ते संध्याकालोऽतिवर्तते ॥ ६१ ॥

धन्यं यशस्यमायुष्यं स्वर्ग्यं पावनमेव च ।
इदमाख्यानमाख्यातं गङ्गावतरणं मया ॥ ६२ ॥

इति बालकाण्डे गङ्गावतरणं नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः ।
विस्मयं परमं गत्वा विश्वामित्रमथाब्रवीत् ॥ १ ॥
अत्यद्भुतमिदं ब्रह्मन्कथितं परमं त्वया ।
गङ्गावतरणं पुण्यं सागरस्यापि पूरणम् ॥ २ ॥
क्षणभूतेव नौ रात्रिः संवृत्तेयं परंतप ।
इमां चिन्तयतोः सर्वां निखिलेन कथां तव ॥ ३ ॥
तस्य सा शर्वरी सर्वा मम सौमित्रिणा सह ।
जगाम चिन्तयानस्य विश्वामित्रकथां शुभाम् ॥ ४ ॥
ततः प्रभाते विमले विश्वामित्रं तपोधनम् ।
उवाच राघवो वाक्यं कृताह्निकमरिंदमः ॥ ५ ॥
गता भगवती रात्रिः श्रोतव्यं परमं श्रुतम् ।
तराम सरितां श्रेष्ठां पुण्यां त्रिपथगां नदीम् ॥ ६ ॥
नौरेषा हि सुविस्तीर्णा ऋषीणां पुण्यकर्मणाम् ।
भगवन्तमिह प्राप्तं ज्ञात्वा त्वरितमागता ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
संतारं कारयामास ऋषिसंघस्य कौशिकः ॥ ८ ॥
उत्तरं तीरमासाद्य संपूज्यर्षिगणांस्तदा ।
गङ्गाकूले निविष्टास्ते विशालां ददृशुः पुरीम् ॥ ९ ॥
ततो मुनिवरस्तूर्णं जगाम सहराघवः ।
विशालां नगरीं रम्यां दिव्यां स्वर्गोपमां तदा ॥ १० ॥
अथ रामो महातेजा विश्वामित्रं महामुनिम् ।
पप्रच्छ प्राञ्जलिर्भूत्वा विशालामुत्तमां पुरीम् ॥ ११ ॥
कतमो राजवंशोऽयं विशालायां महामुने ।
श्रोतुमिच्छामि भद्रं ते परं कौतूहलं हि मे ॥ १२ ॥

तस्य तद्वचन श्रुत्वा रामस्य मुनिपुगव ।
आख्यातु तत्समारेभे विशालाया पुरातनम् ॥ १३ ॥
श्रूयता राम शक्रस्य कथा कथयत शुभाम् ।
अस्मिन्देशे हि यद्वृत्त शृणु तत्त्वेन राघव ॥ १४ ॥
आसन्कृतयुगे राम दितेः पुत्रा महाबला ।
अदितेश्च महाभागा वीर्यवन्त सुधार्मिका ॥ १५ ॥
भ्रातर सर्वधर्मिन पुत्रा कश्यपस्य महात्मन ।
मातृष्वसेया सापत्न्यात्परस्परजिगीषव ॥ १६ ॥
तेषा किल समेताना बुद्धिरासीन्महौजसाम् ।
अजराश्चामराश्चैव कथं स्यामेति राघव ॥ १७ ॥
तेषा चिन्तयता तत्र बुद्धिरासीद्विपश्चिताम् ।
क्षीरोदमथन कृत्वा रस प्राप्स्याम तत्र वै ॥ १८ ॥
ततो निश्चित्य मथन योक्त्र कृत्वा च वासुकिम् ।
मन्थान मन्दर कृत्वा ममन्थुरमितौजस ॥ १९ ॥
अथ वर्षसहस्रेण योक्त्रसर्पशिरासि च ।
वमन्त्यतिविष तत्र ददशुर्दशनै शिला ॥ २० ॥
उत्पपाताग्निसकाश हालाहलमहाविषम् ।
तेन दग्ध जगत्सर्व सदेवासुरमानुषम् ॥ २१ ॥
अथ देवा महादेव शकर शरणार्थिन ।
जग्मु पशुपति रुद्र त्राहि त्राहीति तुष्टुवु ॥ २२ ॥
प्रादुरासीत्ततोऽत्रैव शङ्खचक्रगदाधर ।
उवाचेन स्मित कृत्वा रुद्र शूलधर हरि ॥ २३ ॥
दैवतैर्मथ्यमाने तु यत्पूर्व समुपस्थितम् ।
तत्त्वदीय सुरश्रेष्ठ सुराणामग्रजो हि यत् ॥ २४ ॥
अग्रपूजामिह स्थित्वा गृहाणेद विष प्रभो ।
इत्युक्त्वा च सुरश्रेष्ठस्तत्रैवान्तरधीयत ॥ २५ ॥
देवताना भय दृष्ट्वा श्रुत्वा वाक्य तु शार्ङ्गिण ।
हालाहल विष घोरं सजग्राहामृतोपमम् ॥ २६ ॥

देवान्विसृज्य देवेशो जगाम भगवान्हरः ।
ततो देवासुराः सर्वे ममन्थू रघुनन्दन ॥ २७ ॥
प्रविवेशाथ पातालं मन्थानः पर्वतोत्तमः ।
ततो देवाः सगन्धर्वास्तुष्टुवुर्मधुसूदनम् ॥ २८ ॥
त्वं गतिः सर्वभूतानां विशेषेण दिवौकसाम् ।
पालयास्मान्महाबाहो गिरिमुद्धर्तुमर्हसि ॥ २९ ॥
इति श्रुत्वा हृषीकेशः कामठं रूपमास्थितः ।
पर्वतं पृष्ठतः कृत्वा शिश्ये तत्रोदधौ हरिः ॥ ३० ॥
पर्वताग्रं तु लोकात्मा हस्तेनाक्रम्य केशवः ।
देवानां मध्यतः स्थित्वा ममन्थ पुरुषोत्तमः ॥ ३१ ॥
अथ वर्षसहस्रेण आयुर्वेदमयः पुमान् ।
उदतिष्ठत्सुधर्मात्मा सदण्डः सकमण्डलुः ॥ ३२ ॥
अप्सु निर्मन्थनादेव रसात्तस्माद्वरस्त्रियः ।
उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन् ॥ ३३ ॥
षष्टिः कोट्योऽभवंस्तासामप्सराणां सुवर्चसाम् ।
असंख्येयास्तु काकुत्स्थ यास्तासां परिचारिकाः ॥ ३४ ॥
न ताः स्म प्रतिगृह्णन्ति सर्वे ते देवदानवाः ।
अप्रतिग्रहणात्ताश्च ततः साधारणीकृताः ॥ ३५ ॥
वरुणस्य ततः कन्या वारुणी रघुनन्दन ।
उत्पपात रसात्तस्मान्मार्गमाणा प्रतिग्रहम् ॥ ३६ ॥
दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजाम् ।
अदितेस्तु सुता वीर जगृहुस्तामनिन्दिताम् ॥ ३७ ॥
सुराप्रतिग्रहाद्देवाः सुरा इत्यभिविश्रुताः ।
अप्रतिग्रहणात्तस्या दैतेयाश्चासुरास्तथा ॥ ३८ ॥
उच्चैःश्रवाश्च तत्राश्वो मणिरत्नं च कौस्तुभम् ।
उदतिष्ठन्नरश्रेष्ठ सोमदेवस्तथैव च ॥ ३९ ॥
ततो दीर्घेण कालेन चोत्पन्ना कमलालया ।
अतीव रूपसंपन्ना प्रथमे वयसि स्थिता ॥ ४० ॥

सर्वाभरणपूर्णाङ्गी सर्वलक्षणलक्षिता ।
मुकुटाङ्गदचित्राङ्गी नीलकुञ्चितमूर्धजा ॥ ४१ ॥
तप्तहाटकसकाशा मुक्ताभरणभूषिता ।
चतुर्भुजा महादेवी पद्महस्ता वरानना ॥ ४२ ॥
सा च देवी तथोत्पन्ना पद्मा श्रीर्लोकपूजिता ।
सा पद्मा पद्मनाभस्य ययौ वक्ष स्थल हरे ॥ ४३ ॥
सुरासुराश्च गन्धर्वा क्षोभयामासुरम्बुधिम् ।
तस्मादेतत्समुद्भूत तथैवामृतमुत्तमम् ॥ ४४ ॥
अथ तस्य कृते राम महानासीत्कुलक्षय ।
अदितेस्तु तदा पुत्रा दितिपुत्रानयोधयन् ॥ ४५ ॥
एकतोऽभ्यगमन्सर्वे असुरा राक्षसै सह ।
युद्धमासीन्महाघोर वीर त्रैलोक्यमोहनम् ॥ ४६ ॥
यदा क्षय गत सर्व तदा विष्णुर्महाबल ।
अमृत सोऽहरत्तूर्णं मायामास्थाय मोहिनीम् ॥ ४७ ॥
ये गताभिमुख विष्णुमक्षय पुरुषोत्तमम् ।
सपिष्टास्ते तदा युद्धे विष्णुना प्रभविष्णुना ॥ ४८ ॥
अदितेरात्मजा वीरा दिते पुत्रान्निजघ्निरे ।
तस्मिन्घोरे महायुद्धे दैतेयादित्ययोर्भृशम् ॥ ४९ ॥
निहत्य दितिपुत्रांस्तु राज्य प्राप्य पुरदर ।
शशास मुदितो लोकान्सर्षिसघान्सचारणान् ॥ ५० ॥

इति बालकाण्डे अमृतोत्पत्तिर्नाम पञ्चचत्वारिंश सर्ग ॥ ४५ ॥

---

हतेषु तेषु पुत्रेषु दिति परमदु खिता ।
मारीच कश्यप राम भर्तारमिदमब्रवीत् ॥ १ ॥
हतपुत्रास्मि भगवस्तव पुत्रैर्महाबलै ।
शक्रहन्तारमिच्छामि पुत्र दीर्घतपोर्जितम् ॥ २ ॥
साह तपश्चरिष्यामि गर्भमाधातुमर्हसि ।
तत्र मे शक्रहन्तार त्वमनुज्ञातुमर्हसि ॥ ३ ॥

तस्यास्तद्वचनं श्रुत्वा मारीचः कश्यपस्तदा ।
प्रत्युवाच महातेजा दितिं परमदुःखिताम् ॥ ४ ॥
एवं भवतु भद्रं ते शुचिर्भव तपोधने ।
जनयिष्यसि पुत्रं त्वं शक्रहन्तारमाहवे ॥ ५ ॥
पूर्णे वर्षसहस्रे तु शुचिर्यदि भविष्यसि ।
पुत्रं त्रैलोक्यहन्तारं मत्तो वै जनयिष्यसि ॥ ६ ॥
एवमुक्त्वा महातेजाः पाणिना स ममार्ज ताम् ।
तामालिङ्ग्य ततः स्वस्ति इत्युक्त्वा तपसे ययौ ॥ ७ ॥
गते तस्मिन्नरश्रेष्ठ दितिः परमहर्षिता ।
कुशप्लवनमासाद्य तपस्तेपे सुदारुणम् ॥ ८ ॥
चरन्त्यास्तु तपस्तस्याः परां संनतिमास्थितः ।
परिचर्यां स्वयं शक्रश्चकारोपेत्य तत्परः ॥ ९ ॥
अग्निं कुशान्काष्ठमपः फलमूलं तथैव च ।
न्यवेदयत्सहस्राक्षो यच्चान्यदपि काङ्क्षितम् ॥ १० ॥
गात्रसंवाहनैश्चैव श्रमापनयनैस्तथा ।
शक्रः सर्वेषु कालेषु दितिं परिचचार ह ॥ ११ ॥
पूर्णे वर्षसहस्रे तु दशोने रघुनन्दन ।
दितिः परमसंहृष्टा सहस्राक्षमथाब्रवीत् ॥ १२ ॥
तपश्चरन्त्या वर्षाणि दश वीर्यवतां वर ।
अवशिष्टानि भद्रं ते भ्रातरं द्रक्ष्यसे ततः ॥ १३ ॥
तमहं त्वत्कृते पुत्रं समाधास्ये जयोत्सुकम् ।
त्रैलोक्यविजयं पुत्र सह भोक्ष्यसि विज्वरः ॥ १४ ॥
याचितेन सुरश्रेष्ठ तव पित्रा महात्मना ।
वरो वर्षसहस्रान्ते दत्तो मम सुतं प्रति ॥ १५ ॥
एवमुक्त्वा दितिस्तत्र प्राप्ते मध्यं दिनेश्वरे ।
निद्रयापहृता देवी पादौ कृत्वाथ शीर्षतः ॥ १६ ॥
दृष्ट्वा तामशुचिं शक्रः पादयोः कृतमूर्धजाम् ।
शिरःस्थाने कृतौ पादौ जहास च मुमोद च ॥ १७ ॥

तस्याः शरीरविवरं प्रविवेश पुरंदरः।
गर्भं च सप्तधा राम चिच्छेद परमात्मवान्॥ १८॥
भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा।
रुरोद सुस्वरं राम ततो दितिरबुध्यत॥ १९॥
मा रुदो मा रुदश्चेति गर्भं शक्रोऽभ्यभाषत।
बिभेद च महातेजा रुदन्तमपि वासवः॥ २०॥
न हन्तव्यो न हन्तव्य इति तं दितिरब्रवीत्।
निष्पपात ततः शक्रो मातुर्वचनगौरवात्॥ २१॥
प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत।
अशुचिर्देवि सुप्तासि पादयोः कृतमूर्धजा॥ २२॥
तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे।
अच्छिदं सप्तधा देवि तन्मे त्वं क्षन्तुमर्हसि॥ २३॥

इति बालकाण्डे दितिगर्भच्छेदो नाम षट्चत्वारिंशः सर्गः॥ ४६॥

---

सप्तधा तु कृते गर्भे दितिः परमधार्मिका।
सहस्राक्षं दुराधर्षं वाक्यं सानुनयाब्रवीत्॥ १॥
ममापराधाद्गर्भोऽयं सप्तधा शकलीकृतः।
नापराधो हि देवेश तवात्र बलिसूदन॥ २॥
प्रियं तु कृतमिच्छामि मम गर्भविपर्यये।
मरुतां सप्त सप्तानां स्थानपाला भवन्तु ते॥ ३॥
वातस्कन्धा इमे पुत्र चरन्तु दिवि पुत्रकाः।
मारुता इति विख्याता दिव्यरूपा ममात्मजाः॥ ४॥
ब्रह्मलोकं चरत्वेक इन्द्रलोकं तथापरः।
दिवि वायुरिति ख्यातस्तृतीयोऽपि महायशाः॥ ५॥
चत्वारस्तु सुरश्रेष्ठ दिशो वै तव शासनात्।
संचरिष्यन्ति भद्रं ते देवभूता ममात्मजाः॥ ६॥
तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरंदरः।
उवाच प्राञ्जलिर्वाक्यं दितिं बलिनिषूदनः॥ ७॥

त्वत्कृतेनैव नाम्ना हि भविष्यन्ति तवात्मजाः ।
ख्याता मरुत इत्येते दिव्यरूपा ममाज्ञया ॥ ८ ॥
अमृतप्राशिनः पुत्रा इमे ते सहिता मया ।
विचरिष्यन्ति लोकांस्त्रीन्निर्भया विगतज्वराः ॥ ९ ॥
एवं तौ निश्चयं कृत्वा मातापुत्रौ तपोवने ।
जग्मतुस्त्रिदिवं राम कृतार्थाविति नः श्रुतम् ॥ १० ॥
एष देशः स काकुत्स्थ महेन्द्राध्युषितः पुरा ।
दितिं यत्र तपःसिद्धामेवं परिचचार सः ॥ ११ ॥
इक्ष्वाकोरत्र राजर्षेः पुत्रः परमधार्मिकः ।
अलम्बुषायामुत्पन्नो विशाल इति विश्रुतः ॥ १२ ॥
तेन चासीदिह स्थाने विशालेति पुरी कृता ।
विशालस्य सुतो राजा हेमचन्द्रो महाबलः ॥ १३ ॥
सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरः ।
सुचन्द्रतनयो राम धूम्राश्व इति विश्रुतः ॥ १४ ॥
धूम्राश्वतनयश्चापि सृञ्जयः समपद्यत ।
सृञ्जयस्य सुतः श्रीमान्सहदेवः प्रतापवान् ॥ १५ ॥
कुशाश्वः सहदेवस्य पुत्रः परमधार्मिकः ।
कुशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् ॥ १६ ॥
तस्य पुत्रो महातेजाः संप्रत्येष पुरीमिमाम् ।
आवसत्यमरप्रख्यः सुमतिर्नाम दुर्जयः ॥ १७ ॥
इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः ॥ १८ ॥
इहाद्य रजनीमेकां सुखं स्वप्स्यामहे वयम् ।
श्वः प्रभाते नरश्रेष्ठ जनकं द्रष्टुमर्हसि ॥ १९ ॥
सुमतिस्तु ततः श्रुत्वा विश्वामित्रमुपागतम् ।
प्रत्युद्गम्य महात्मानं पूजयामास पार्थिवः ॥ २० ॥
पूजां च परमां कृत्वा सोपाध्यायः सबान्धवः ।
प्राञ्जलिः कुशलं पृष्ट्वा विश्वामित्रमथाब्रवीत् ॥ २१ ॥

धन्योस्म्यनुगृहीतोस्मि यस्य मे विषय मुने ।
सम्प्राप्तो दर्शन चैव नास्ति धन्यतरो मम ॥ २२ ॥

इति बालकाण्डे सुमतिसमागमो नाम सप्तचत्वारिंश॰ सर्ग॰ ॥४७॥

---

पृष्ट्वा तु कुशल तत्र परस्परसमागमे ।
कथान्ते सुमतिर्वाक्य व्याजहार महामुनिम् ॥ १ ॥
इमौ कुमारौ भद्र ते देवतुल्यपराक्रमौ ।
गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ २ ॥
पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ।
अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ ३ ॥
यदृच्छयैव गा प्राप्तौ देवलोकादिवामरौ ।
कथ पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ ४ ॥
भूषयन्ताविम देश चन्द्रसूर्याविवाम्बरम् ।
परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितै ॥ ५ ॥
तस्य तद्वचन श्रुत्वा यथावृत्त न्यवेदयत् ।
सिद्धाश्रमनिवास च राक्षसाना वध तथा ॥ ६ ॥
विश्वामित्रवच श्रुत्वा राजा परमविस्मित ।
अतिथी पूजयामास पुत्रौ दशरथस्य तौ ॥ ७ ॥
तत परमसत्कार सुमते प्राप्य राघवौ ।
उष्य तत्र निशामेका जग्मतुर्मिथिला प्रति ॥ ८ ॥
ता दृष्ट्वा दूरत सर्वे जनकस्य पुरी शुभाम् ।
मुनयो हृष्टमनस शशसु साधु साध्विति ॥ ९ ॥
मिथिलोपवने तत्र आश्रम दृश्य राघव ।
पुराण निर्जन पुण्य पप्रच्छ मुनिपुङ्गवम् ॥ १० ॥
श्रीमदाश्रमसकाश किं त्विद मुनिवर्जितम् ।
श्रोतुमिच्छामि भगवन्कस्याय पूर्व आश्रम ॥ ११ ॥
तच्छ्रुत्वा राघवेणोक्त वाक्य वाक्यविशारद ।
प्रत्युवाच महातेजा विश्वामित्रो महामुनि ॥ १२ ॥

हन्त ते कथयिष्यामि शृणु तत्त्वेन राघव ।
यस्यैतदाश्रमपदं शप्तं कोपान्महात्मना ॥ १३ ॥
गौतमस्य नरश्रेष्ठ पूर्वमासीन्महामुनेः ।
आश्रमो दिव्यसंकाशः सुरैरपि सुपूजितः ॥ १४ ॥
स चात्र तप आतिष्ठदहल्यासहितो मुनिः ।
संवत्सरसहस्राणि बहूनि रघुनन्दन ॥ १५ ॥
कदाचिद्दिवसे राम ततो दूरगते मुनौ ।
तदस्या आश्रमे दृष्ट्वा रम्यं रूपं पुरंदरः ॥ १६ ॥
तस्यान्तरं विदित्वा च कामार्तस्त्रिदिवेश्वरः ।
मुनिवेषधरो भूत्वा सोहल्यामिदमब्रवीत् ॥ १७ ॥
ऋतुकालं प्रतीक्षन्ते नार्थिनः सुसमाहिते ।
संगमं त्वहमिच्छामि त्वया सह सुमध्यमे ॥ १८ ॥
मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन ।
मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ १९ ॥
अथाब्रवीत्सुरश्रेष्ठं कृतार्थेनान्तरात्मना ।
कृतार्थास्मि सुरश्रेष्ठ गच्छ शीघ्रमितः प्रभो ॥ २० ॥
आत्मानं मां च देवेश सर्वथा रक्ष गौतमात् ।
इन्द्रस्तु प्रहसन्वाक्यमहल्यामिदमब्रवीत् ॥ २१ ॥
सुश्रोणि परितुष्टोस्मि गमिष्यामि यथागतम् ।
एवं संगम्य तु तया निश्चक्रामोटजात्ततः ॥ २२ ॥
स संभ्रमात्त्वरन्राम शङ्कितो गौतमं प्रति ।
गौतमं संददर्शाथ प्रविशन्तं महामुनिम् ॥ २३ ॥
देवदानवदुर्धर्षं तपोबलसमन्वितम् ।
तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् ॥ २४ ॥
गृहीतसमिधं तत्र सकुशं मुनिपुंगवम् ।
दृष्ट्वा सुरपतिस्त्रस्तो विषण्णवदनोभवत् ॥ २५ ॥
अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः ।
दुर्वृत्तं वृत्तसंपन्नो रोषाद्वचनमब्रवीत् ॥ २६ ॥

मम रूपं समास्थाय कृतवानसि दुर्मते।
अकर्तव्यमिदं यस्माद्विफलस्त्वं भविष्यसि॥ २७॥
गौतमेनैवमुक्तस्य सरोषेण महात्मना।
पेततुर्वृषणौ भूमौ सहस्राक्षस्य तत्क्षणात्॥ २८॥
व्यथितः स तदा चासीद्धतौजा विफलीकृतः।
धर्षितस्तपसोग्रेण कश्मलं चैनमाविशत्॥ २९॥
तथा शप्त्वा स वै शक्रं भार्यामपि च शप्तवान्।
इह वर्षसहस्राणि बहूनि निवसिष्यसि॥ ३०॥
वातभक्षा निराहारा तप्यन्ती भस्मशायिनी।
अदृश्या सर्वभूतानामाश्रमेऽस्मिन्निवत्स्यसि॥ ३१॥
यदा त्विदं वनं घोरं रामो दशरथात्मजः।
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि॥ ३२॥
तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता।
मत्सकाशे मुदा युक्ता स्वं वपुर्धारयिष्यसि॥ ३३॥
एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम्।
हिमवच्छिखरे रम्ये तपस्तेपे सुदुश्चरम्॥ ३४॥

इति बालकाण्डे शक्राहल्याशापो नाम अष्टचत्वारिंशः सर्गः॥४८॥

---

अफलस्तु ततः शक्रो देवानग्निपुरोगमान्।
अब्रवीत्त्रस्तनयनः सर्षिसंघान्सचारणान्॥ १॥
कुर्वता तपसो विघ्नं गौतमस्य महात्मनः।
क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम्॥ २॥
अफलोऽस्मि कृतस्तेन क्रोधात्सा च निराकृता।
शापमोक्षेण महता तपोऽस्यापहृतं मया॥ ३॥
तन्मां सुरवराः सर्वे सर्षिसंघाः सचारणाः।
सुरकार्यकरमफलं सफलं कर्तुमर्हथ॥ ४॥
शतक्रतोर्वचः श्रुत्वा देवाः साग्निपुरोगमाः।
पितृदेवानुपेत्याहुः सर्वे सह मरुद्गणैः॥ ५॥

पुरा विचार्य मोहेन ऋषिपत्नीं शतक्रतुः ।
धर्षयित्वा मुनेः शापात्तत्रैव विफलः कृतः ।
इदानीं कुप्यते देवान्देवराजः पुरंदरः ॥ ६ ॥
अयं मेषः सवृषणः शक्रो ह्यवृषणः कृतः ।
मेषस्य वृषणौ गृह्य शक्रायाशु प्रयच्छत ।
अफलस्तु कृतो मेषः परां तुष्टिं प्रदास्यति ॥ ७ ॥
भवतां हर्षणार्थाय ये च दास्यन्ति मानवाः ।
अक्षयं हि फलं तेषां यूयं दास्यथ पुष्कलम् ॥ ८ ॥
अग्नेस्तु वचनं श्रुत्वा पितृदेवाः समागताः ।
उत्पाट्य मेषवृषणौ सहस्राक्षे न्यवेशयन् ॥ ९ ॥
तदाप्रभृति काकुत्स्थ पितृदेवाः समागताः ।
अफलान्भुञ्जते मेषान्फलैस्तेषामयोजयन् ॥ १० ॥
इन्द्रस्तु मेषवृषणस्तदाप्रभृति राघव ।
गौतमस्य प्रभावेण तपसा च महात्मनः ॥ ११ ॥
तदागच्छ महातेज आश्रमं पुण्यकर्मणः ।
तारयैनां महाभागामहल्यां देवरूपिणीम् ॥ १२ ॥
विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः ।
विश्वामित्रं पुरस्कृत्य आश्रमं प्रविवेश ह ॥ १३ ॥
ददर्श च महाभागां तपसा द्योतितप्रभाम् ।
लोकैरपि समागम्य दुर्निरीक्ष्यां सुरासुरैः ॥ १४ ॥
प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव ।
धूमेनापि परीताङ्गीं दीप्तामग्निशिखामिव ॥ १५ ॥
तुषारेणावृतां साभ्रां पूर्णचन्द्रप्रभामिव ।
मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥ १६ ॥
सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ।
त्रयाणामपि लोकानां यावद्रामस्य दर्शनम् ॥ १७ ॥
राघवौ तु तदा तस्याः पादौ जगृहतुर्मुदा ।
स्मरन्ती गौतमवचः प्रतिजग्राह सा हि तौ ॥ १८ ॥

पाद्यमर्घ्यं तथातिथ्यं चकार सुसमाहिता ।
प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा ॥ १९ ॥
पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनैः ।
गन्धर्वाप्सरसां चैव महानासीत्समुत्सवः ॥ २० ॥
साधु साध्विति देवास्तामहल्यां समपूजयन् ।
तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम् ॥ २१ ॥
गौतमश्च महातेजा दृष्ट्वा दिव्येन चक्षुषा ।
स्वमाश्रमपदं राममागत प्रत्यपूजयत् ॥ २२ ॥
समेत्य भार्यया चैव पूतयाहल्यया तदा ।
तयैव सहितो भूयस्तपस्तेपे महातपाः ॥ २३ ॥
रामोऽपि परमां पूजां गौतमस्य महामुनेः ।
सकाशाद्विधिवत्प्राप्य जगाम मिथिलां ततः ॥ २४ ॥

**इति बालकाण्डे अहल्याशापोद्धारो नाम एकोनपञ्चाशः सर्गः ॥४९॥**

---

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ १ ॥
रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मणः ।
साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥ २ ॥
बहूनीह सहस्राणि नानादेशनिवासिनाम् ।
ब्राह्मणानां महाभाग वेदाध्ययनशालिनाम् ॥ ३ ॥
ऋषिवाटाश्च दृश्यन्ते शकटीशतसङ्कुलाः ।
देशो विधीयतां ब्रह्मन्यत्र वत्स्यामहे वयम् ॥ ४ ॥
रामस्य वचनं श्रुत्वा विश्वामित्रो महामुनिः ।
निवेशमकरोद्देशे विविक्ते सलिलायुते ॥ ५ ॥
विश्वामित्रमनुप्राप्तं श्रुत्वा नृपवरस्तदा ।
शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितम् ॥ ६ ॥
ऋत्विग्भिः सहितश्चान्यैरादायार्घ्यं त्वरान्वितः ।
प्रत्युज्जगाम सहसा विनयेन समन्वितः ॥ ७ ॥

प्रतिगृह्य तु तां पूजां जनकान्मुनिसत्तमः ।
पप्रच्छ कुशलं राज्ञो यज्ञस्यामृद्धयमेव च ॥ ८ ॥
स तांश्चाथ मुनीन्पृष्ट्वा सोपाध्यायपुरोधसः ।
यथार्हमृषिभिः सर्वैः समागच्छत्प्रहृष्टवत् ॥ ९ ॥
अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ।
आसने भगवानास्तां सहैभिर्मुनिपुंगवैः ॥ १० ॥
जनकस्य वचः श्रुत्वा निषसाद महामुनिः ।
पुरोधा ऋत्विजश्चैव राजा च सह मन्त्रिभिः ॥ ११ ॥
आसनेषु यथान्यायमुपविष्टान्समन्ततः ।
दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् ॥ १२ ॥
अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ।
अद्य यज्ञफलं प्राप्तं भगवद्दर्शनान्मया ॥ १३ ॥
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगव ।
यज्ञोपसदनं ब्रह्मन्प्राप्तोऽसि मुनिभिः सह ॥ १४ ॥
द्वादशाहं तु ब्रह्मर्षे शेषमाहुर्मनीषिणः ।
ततो भागार्थिनो देवान्द्रष्टुमर्हसि कौशिक ॥ १५ ॥
इत्युक्त्वा मुनिशार्दूलं प्रहृष्टवदनस्तदा ।
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रयतो नृपः ॥ १६ ॥
इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ।
गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ १७ ॥
पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ।
अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ १८ ॥
यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ ।
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ १९ ॥
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ।
परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ॥ २० ॥
तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः ।
न्यवेदयदमेयात्मा पुत्रौ दशरथस्य तौ ॥ २१ ॥

सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ।
तच्चागमनमव्यग्रं विशालायाश्च दर्शनम् ॥ २२ ॥
अहल्यादर्शनं चैव गौतमेन समागमम् ।
महाधनुषि जिज्ञासा कर्तुमागमनं तदा ॥ २३ ॥
एतत्सर्वं महातेजा जनकाय महात्मने ।
निवेद्य विररामाथ विश्वामित्रो महामुनिः ॥ २४ ॥
इति बालकाण्डे जनकसमागमो नाम पञ्चाशः सर्गः ॥ ५० ॥

---

तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।
हृष्टरोमा महातेजाः शतानन्दो महातपाः ॥ १ ॥
गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।
रामसंदर्शनादेव परं विस्मयमागतः ॥ २ ॥
एतौ निषण्णौ संप्रेक्ष्य शतानन्दो नृपात्मजौ ।
सुखासीनं मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत् ॥ ३ ॥
अपि ते मुनिशार्दूल मम माता यशस्विनी ।
दर्शिता राजपुत्राय तपो दीर्घमुपागता ॥ ४ ॥
अपि रामे महाभागा मम माता यशस्विनी ।
वन्यैरुपाहरत्पूजां पूजार्हे सर्वदेहिनाम् ॥ ५ ॥
अपि रामाय कथितं यद्वृत्तं तत्पुरातनम् ।
मम मातुर्महातेजो दैवेन दुरनुष्ठितम् ॥ ६ ॥
अपि कौशिक भद्रं ते गुरुणा मम संगता ।
मम माता मुनिश्रेष्ठ रामसंदर्शनादितः ॥ ७ ॥
अपि प्रीतेन मनसा गुरुर्मे कुशिकात्मज ।
पूतां दीर्घेण तपसा मातारं मेऽभ्यनन्दत ॥ ८ ॥
अपि मे गुरुणा रामः पूजितः कुशिकात्मज ।
इहागतो महातेजाः पूजां प्राप्य महात्मनः ॥ ९ ॥
तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः ।
प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् ॥ १० ॥

नातिक्रान्तं मुनिश्रेष्ठ यत्कर्तव्यं कृतं मया ।
संगता मुनिना पत्नी भार्गवेणेव रेणुका ॥ ११ ॥
तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः ।
शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२ ॥
स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोसि राघव ।
विश्वामित्रं पुरस्कृत्य महर्षिमपराजितम् ॥ १३ ॥
अचिन्त्यकर्मा तपसा ब्रह्मर्षिरमितप्रभः ।
विश्वामित्रो महाबाहो वेत्स्येनं परमां गतिम् ॥ १४ ॥
नास्ति धन्यतरो राम त्वत्तोन्यो भुवि कश्चन ।
गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ॥ १५ ॥
श्रूयतां चाभिधास्यामि कौशिकस्य महात्मनः ।
यथाबलं यथावृत्तं तन्मे निगदतः शृणु ॥ १६ ॥
राजासीदेष धर्मात्मा दीर्घकालमरिंदमः ।
धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः ॥ १७ ॥
प्रजापतिसुतस्त्वासीत्कुशो नाम महीपतिः ।
कुशस्य पुत्रो बलवान्कुशनाभः सुधार्मिकः ॥ १८ ॥
कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः ।
गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः ॥ १९ ॥
विश्वामित्रो महातेजाः पालयामास मेदिनीम् ।
बहुवर्षसहस्राणि राजा राज्यमकारयत् ॥ २० ॥
कदाचित्तु महातेजा योजयित्वा वरूथिनीम् ।
अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१ ॥
नगराणि च राष्ट्राणि सरितश्च महागिरीन् ।
आश्रमान्क्रमशो राजा विचरन्नाजगाम ह ॥ २२ ॥
वसिष्ठस्याश्रमपदं नानापुष्पलताद्रुमम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३ ॥
देवदानवगन्धर्वैः किंनरैरुपशोभितम् ।
प्रशान्तहरिणाकीर्णं द्विजसंघनिषेवितम् ॥ २४ ॥

तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ।
सततं संकुलं श्रीमद्ब्रह्मकल्पैर्महाव्रतैः ॥ २५ ॥
अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ।
फलमूलाशनैर्दान्तैर्जितक्रोधैर्जितेन्द्रियैः ॥ २६ ॥
ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः ।
अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम् ॥ २७ ॥
वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम् ।
ददर्श जयतां श्रेष्ठो विश्वामित्रो महामनाः ॥ २८ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने शतानन्दवाक्यं नाम एकपञ्चाशः सर्गः ॥ ५१ ॥

---

स दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः ।
प्रणतः प्रणयाद्वीरो वसिष्ठं जपतां वरम् ॥ १ ॥
स्वागतं तव चेत्युक्तो वसिष्ठेन महात्मना ।
आसनं चास्य भगवान्वसिष्ठो व्यादिदेश ह ॥ २ ॥
उपविष्टाय च तदा विश्वामित्राय धीमते ।
यथान्यायं मुनिवरः फलमूलमुपाहरत् ॥ ३ ॥
प्रतिगृह्य तु तां पूजां वसिष्ठाद्राजसत्तमः ।
विश्वामित्रो महातेजाः कुशलं पर्यपृच्छत ॥ ४ ॥
तपोग्निहोत्रशिष्येषु वनस्पतिगणे तथा ।
सर्वत्र कुशलं प्राह वसिष्ठो राजसत्तमम् ॥ ५ ॥
सुखोपविष्टं राजानं विश्वामित्रं महातपाः ।
पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणः सुतः ॥ ६ ॥
कच्चित्ते कुशलं राजन्कच्चिद्धर्मेण रञ्जयन् ।
प्रजाः पालयसे वीर राजवृत्तेन धार्मिकः ॥ ७ ॥
कच्चित्ते संभृता भृत्याः कच्चित्तिष्ठन्ति शासने ।
कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन ॥ ८ ॥
कच्चिद्बलेषु कोशेषु मित्रेषु च परंतप ।
कुशलं ते नरव्याघ्र पुत्रपौत्रे तथानघ ॥ ९ ॥

सर्वत्र कुशलं राजा तमतः प्रत्युदाहरत् ।
विश्वामित्रो महातेजा वसिष्ठं विनयान्वितः ॥ १० ॥
कृत्वोभौ सुचिरं कालं धर्मिष्ठौ ताः कथास्तदा ।
मुदा परमया युक्तौ प्रीयेतां तौ परस्परम् ॥ ११ ॥
ततो वसिष्ठो भगवान्कथान्ते रघुनन्दन ।
विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥ १२ ॥
आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल ।
तव चैवाप्रमेयस्य यथार्हं संप्रतीच्छ मे ॥ १३ ॥
सत्क्रियां हि भवानेतां प्रतीच्छतु मयोद्यताम् ।
राजंस्त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥ १४ ॥
एवमुक्तो वसिष्ठेन विश्वामित्रो महामतिः ।
कृतमित्यब्रवीद्राजा पूजावाक्येन मे त्वया ॥ १५ ॥
फलमूलेन भगवन्विद्यते यत्तवाश्रमे ।
पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६ ॥
सर्वथा च महाप्राज्ञ पूजार्हेण सुपूजितः ।
गमिष्यामि नमस्तेस्तु मैत्रेणेक्षस्व चक्षुषा ॥ १७ ॥
एवं ब्रुवन्तं राजानं वसिष्ठः पुनरेव हि ।
न्यमन्त्रयत धर्मात्मा पुनः पुनरुदारधीः ॥ १८ ॥
बाढमित्येव गाधेयो वसिष्ठं प्रत्युवाच ह ।
यथाप्रिय भगवतस्तथास्तु मुनिपुंगव ॥ १९ ॥
एवमुक्तस्तथा तेन वसिष्ठो जपता वरः ।
आजुहाव ततो धेनुं कल्माषीं धूतकल्मषाम् ॥ २० ॥
एह्येहि शबले क्षिप्रं शृणु चैव वचो मम ।
सबलस्यास्य राजर्षेः कर्तुं व्यवसितोस्म्यहम् ।
भोजनेन महार्हेण सत्कारं तद्विधत्स्व मे ॥ २१ ॥
यस्य यस्य यथाकामं षड्रसेष्वभिपूजितम् ।
तत्सर्वं कामधुग्दिव्ये अभिवर्ष कृते मम ॥ २२ ॥

रसेनान्नेन पेयेन लेह्यचोष्येण संयुतम् ।
अन्नानां निचयं सर्वं सृजस्व शबले त्वर ॥ २३ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने विश्वामित्रनिमन्त्रणं नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

एवमुक्ता वसिष्ठेन शबला शत्रुसूदन ।
विदधे कामधुक्कामान्यस्य यस्येप्सितान्यथा ॥ १ ॥
इक्षून्मधूनि लाजांश्च मैरेयांश्च वरासवान् ।
पानानि च महार्हाणि भक्ष्यांश्चोच्चावचानपि ॥ २ ॥
उष्णाढ्यस्यौदनस्यात्र राशयः पर्वतोपमाः ।
मिष्टान्यन्नानि सूपाश्च दधिकुल्यस्तथैव च ॥ ३ ॥
नानास्वादुरसानां च खाण्डवानां तथैव च ।
भाजनानि सुपूर्णानि गौडानि च सहस्रशः ॥ ४ ॥
सर्वमासीत्सुसंतुष्टं हृष्टपुष्टजनायुतम् ।
विश्वामित्रबलं राम वसिष्ठेन सुतर्पितम् ॥ ५ ॥
विश्वामित्रो हि राजर्षिर्हृष्टपुष्टस्तदाभवत् ।
सामात्यो मन्त्रिसहितः सभृत्यबलवाहनः ॥ ६ ॥
युक्तः परेण हर्षेण वसिष्ठमिदमब्रवीत् ।
पूजितोहं त्वया ब्रह्मन्पूजार्हेण सुसत्कृतः ॥ ७ ॥
श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद ।
गवां शतसहस्रेण दीयतां शबला मम ॥ ८ ॥
रत्नं हि भगवन्नेतद्रत्नभागी च पार्थिवः ।
तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज ॥ ९ ॥
एवमुक्तस्तु भगवान्वसिष्ठो मुनिपुंगवः ।
विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिम् ॥ १० ॥
नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ।
राजन्दास्यामि शबलां राशिभी रजतस्य वा ॥ ११ ॥
न परित्यागमर्हेयं मत्सकाशादरिंदम ।
शाश्वती शबला मह्यं कीर्तिरात्मवतो यथा ॥ १२ ॥

अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च ।
आयत्तमग्निहोत्रं च बलिर्होमस्तथैव च ॥ १३ ॥
स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ।
आयत्तमत्र राजर्षे सर्वमेतन्न संशयः ॥ १४ ॥
सर्वस्वमेतत्सत्येन मम तुष्टिकरी तथा ।
कारणैर्बहुभी राजन्न दास्ये शबलां तव ॥ १५ ॥
वसिष्ठेनैवमुक्तस्तु विश्वामित्रोऽब्रवीत्तदा ।
संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः ॥ १६ ॥
हिरण्यकक्ष्यग्रैवेयान्सुवर्णाङ्कुशभूषितान् ।
ददामि कुञ्जराणां ते सहस्राणि चतुर्दश ॥ १७ ॥
हैरण्यानां रथानां च श्वेताश्वानां चतुर्युजाम् ।
ददामि ते शतान्यष्टौ किङ्किणीकविभूषितान् ॥ १८ ॥
हयानां देशजातानां कुलजानां महौजसाम् ।
सहस्रमेकं दश च ददामि तव सुव्रत ॥ १९ ॥
नानावर्णविभक्तानां वयःस्थानां तथैव च ।
ददाम्येकां गवां कोटिं शबला दीयतां मम ॥ २० ॥
यावदिच्छसि रत्नानि हिरण्यं वा द्विजोत्तम ।
तावद्ददामि ते सर्वं दीयतां शबला मम ॥ २१ ॥
एवमुक्तस्तु भगवान्विश्वामित्रेण धीमता ।
न दास्यामीति शबलां प्राह राजन्कथंचन ॥ २२ ॥
एतदेव हि मे रत्नमेतदेव हि मे धनम् ।
एतदेव हि सर्वस्वमेतदेव हि जीवितम् ॥ २३ ॥
दर्शश्च पौर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः ।
एतदेव हि मे राजन्विविधाश्च क्रियास्तथा ॥ २४ ॥
अदोमूलाः क्रियाः सर्वा मम राजन्न संशयः ।
बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥ २५ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने वसिष्ठविश्वामित्रसंवादो नाम त्रिपञ्चाशः सर्गः ॥ ५३ ॥

कामधेनुं वसिष्ठोसौ यदा न त्यजते मुनिः ।
तदास्य शबलां राजा विश्वामित्रोन्वकर्षत ॥ १ ॥
नीयमाना तु शबला राम राज्ञा महात्मना ।
दुःखिता चिन्तयामास रुदती शोककर्शिता ॥ २ ॥ ? म
परित्यक्ता वसिष्ठेन किमहं सुमहात्मना ।
याहं राजभटैर्दीना ह्रियेय भृशदुःखिता ॥ ३ ॥
किं मयापकृत तस्य महर्षेर्भावितात्मनः ।
यन्मामनागसं दृष्ट्वा भक्ता त्यजति धार्मिकः ॥ ४ ॥
इति सा चिन्तयित्वा तु निःश्वस्य च पुनः पुनः ।
जगाम वेगेन तदा वसिष्ठं परमौजसा ॥ ५ ॥
विधूय तांस्तदा भृत्याञ्छतशः शत्रुसूदन ।
जगामानिलवेगेन पादमूलं महात्मनः ॥ ६ ॥
शबला सा रुदन्ती च क्रोशन्ती चेदमब्रवीत् ।
वसिष्ठस्याग्रतः स्थित्वा मेघदुन्दुभिराविणी ॥ ७ ॥
भगवन्किं परित्यक्ता त्वयाहं ब्रह्मणः सुत ।
यस्माद्राजभटा मां हि नयन्ति त्वत्सकाशतः ॥ ८ ॥
एवमुक्तस्तु ब्रह्मर्षिरिदं वचनमब्रवीत् ।
शोकसंतप्तहृदया स्वसारमिव दुःखिताम् ॥ ९ ॥
न त्वा त्यजामि शबले नापि मेपकृतं त्वया ।
एष त्वा नयते राजा बलोन्मत्तो महाबलः ॥ १० ॥
न हि तुल्यं बलं मन्ये मम राज्ञा विशेषतः ।
बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च ॥ ११ ॥
इयमक्षौहिणी पूर्णा गजवाजिरथाकुला ।
पत्तिध्वजसमाकीर्णा तेनासौ बलवत्तरः ॥ १२ ॥
एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत् ।
वचनं वचनज्ञा सा ब्रह्मर्षिमतुलप्रभम् ॥ १३ ॥
न बलं क्षत्रियस्याहुर्ब्राह्मणा बलवत्तराः ।
ब्रह्मन्ब्रह्मबलं दिव्यं क्षात्राच्च बलवत्तरम् ॥ १४ ॥

अप्रमेयं बलं तुभ्यं न त्वया बलवत्तरः ।
विश्वामित्रो महावीर्यस्तेजस्तव दुरासदम् ॥ १५ ॥
नियुङ्क्ष्व मां महातेजस्त्वद्ब्रह्मबलसंभृताम् ।
तस्य दर्पं बलं यत्तन्नाशयामि दुरात्मनः ॥ १६ ॥
इत्युक्तस्तु तया राम वसिष्ठः महायशाः ।
सृजस्वेति तदोवाच बलं परबलार्दनम् ॥ १७ ॥
तस्या हुम्भारवोत्सृष्टाः पह्लवाः शतशो नृप ।
नाशयन्ति बलं सर्वं विश्वामित्रस्य पश्यतः ॥ १८ ॥
स राजा परमक्रुद्धः क्रोधविस्फारितेक्षणः ।
पह्लवान्नाशयामास शस्त्रैरुच्चावचैरपि ॥ १९ ॥
विश्वामित्रार्दितान्दृष्ट्वा पह्लवाञ्छतशस्तदा ।
भूय एवासृजद्घोराञ्छकान्यवनमिश्रितान् ॥ २० ॥
तैरासीत्संवृता भूमिः शकैर्यवनमिश्रितैः ।
प्रभावद्भिर्महावीर्यैर्हेमकिञ्जल्कसंनिभैः ॥ २१ ॥
तीक्ष्णासिपट्टिशधरैर्हेमवर्णाम्बरावृतैः ।
निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः ॥ २२ ॥
ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोच ह ।
तैस्ते यवनकाम्बोजा बर्बराश्चाकुलीकृताः ॥ २३ ॥

वे बालकाण्डे विश्वामित्रोपाख्याने विश्वामित्रशकादियुद्धं
नाम चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

ततस्तानाकुलान्दृष्ट्वा विश्वामित्रास्त्रमोहितान् ।
वसिष्ठश्चोदयामास कामधुक्सृज योगतः ॥ १ ॥
तस्या हुम्भारवाज्जाताः काम्बोजा रविसंनिभाः ।
ऊधसश्चाथ संभूता बर्बराः शस्त्रपाणयः ॥ २ ॥
योनिदेशाच्च यवनाः शकृद्देशाच्छकाः स्मृताः ।
रोमकूपेषु म्लेच्छाश्च हारीताः सकिरातकाः ॥ ३ ॥

तैस्तन्निषूदितं सर्वं विश्वामित्रस्य तत्क्षणात् ।
सपदातिगजं साश्वं सरथं रघुनन्दन ॥ ४ ॥
दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना ।
विश्वामित्रसुतानां तु शतं नानाविधायुधम् ॥ ५ ॥
अभ्यधावत्सुसंक्रुद्धं वसिष्ठं जपतां वरम् ।
हुंकारेणैव तान्सर्वान्निर्ददाह महानृषिः ॥ ६ ॥
ते साश्वरथपादाता वसिष्ठेन महात्मना ।
भस्मीकृता मुहूर्तेन विश्वामित्रसुतास्तथा ॥ ७ ॥
दृष्ट्वा विनाशितान्सर्वान्बलं च सुमहायशाः ।
सव्रीडं चिन्तयाविष्टो विश्वामित्रोभवत्तदा ॥ ८ ॥
समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः ।
उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ९ ॥
हतपुत्रबलो दीनो लूनपक्ष इव द्विजः ।
गतसर्वबलोत्साहो निर्वेदं समपद्यत ॥ १० ॥
स पुत्रमेकं राज्याय पालयेति नियुज्य च ।
पृथिवीं क्षत्रधर्मेण वनमेवाभ्यपद्यत ॥ ११ ॥
स गत्वा हिमवत्पार्श्वे किंनरोरगसेविते ।
महादेवप्रसादार्थं तपस्तेपे महातपाः ॥ १२ ॥
केनचित्त्वथ कालेन देवेशो वृषभध्वजः ।
दर्शयामास वरदो विश्वामित्रं महाबलम् ॥ १३ ॥
किमर्थं तप्यसे राजन्ब्रूहि यत्ते विवक्षितम् ।
वरदोस्मि वरो यस्ते काङ्क्षितः सोभिधीयताम् ॥ १४ ॥
एवमुक्तस्तु देवेन विश्वामित्रो महातपाः ।
प्रणिपत्य महादेवमिदं वचनमब्रवीत् ॥ १५ ॥
यदि तुष्टो महादेव धनुर्वेदो ममानघ ।
साङ्गोपाङ्गोपनिषदः सरहस्यः प्रदीयताम् ॥ १६ ॥
यानि देवेषु चास्त्राणि दानवेषु महर्षिषु ।
गन्धर्वयक्षरक्षःसु प्रतिभान्तु ममानघ ॥ १७ ॥

तव प्रसादाद्भवतु देवदेव ममेप्सितम् ।
एवमस्त्विति देवेशो वाक्यमुक्त्वा दिवं ययौ ॥ १८ ॥
प्राप्य चास्त्राणि देवेशाद्विश्वामित्रो महाबलः ।
दर्पेण महता युक्तो दर्पपूर्णोऽभवत्तदा ॥ १९ ॥
विवर्धमानो वीर्येण समुद्र इव पर्वणि ।
हतमेव तदा मेने वसिष्ठमृषिसत्तमम् ॥ २० ॥
ततो गत्वाश्रमपदं मुमोचास्त्राणि पार्थिवः ।
यैस्तत्तपोवनं नाम निर्दग्धं चास्त्रतेजसा ॥ २१ ॥
उदीर्यमाणमस्त्रं तद्विश्वामित्रस्य धीमतः ।
दृष्ट्वा विप्रद्रुता भीता मुनयः शतशो दिशः ॥ २२ ॥
वसिष्ठस्य च ये शिष्या ये च वै मृगपक्षिणः ।
विद्रवन्ति भयाद्भीता नानादिग्भ्यः सहस्रशः ॥ २३ ॥
वसिष्ठस्याश्रमपदं शून्यमासीन्महात्मनः ।
मुहूर्तमिव निःशब्दमासीदीरिणसंनिभम् ॥ २४ ॥
वदतो वै वसिष्ठस्य मा भैरिति मुहुर्मुहुः ।
नाशयाम्यद्य गाधेयं नीहारमिव भास्करः ॥ २५ ॥
एवमुक्त्वा महातेजा वसिष्ठो जपतां वरः ।
विश्वामित्रं तदा वाक्यं सरोषमिदमब्रवीत् ॥ २६ ॥
आश्रमं चिरसंवृद्धं यद्विनाशितवानसि ।
दुराचारो हि यन्मूढस्तस्मात्त्वं न भविष्यसि ॥ २७ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने वसिष्ठाश्रमदाहो नाम
पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः ।
आग्नेयमस्त्रमुद्दिश्य तिष्ठ तिष्ठेति चाब्रवीत् ॥ १ ॥
ब्रह्मदण्डं समुद्यम्य कालदण्डमिवापरम् ।
वसिष्ठो भगवान्क्रोधादिदं वचनमब्रवीत् ॥ २ ॥

क्षत्रबन्धो स्थितो ह्येष यद्बलं तद्धि दर्शय ।
नाशयाम्यद्य ते दर्पं शस्त्रस्य तव गाधिज ॥ ३ ॥
क्व च ते क्षत्रियबलं क्व च ब्रह्मबलं महत् ।
पश्य ब्रह्मबलं दिव्यं मम क्षत्रियपांसन ॥ ४ ॥
तस्यास्त्रं गाधिपुत्रस्य घोरमाग्नेयमुद्यतम् ।
ब्रह्मदण्डेन तच्छान्तमग्नेर्वेग इवाम्भसा ॥ ५ ॥
वारुणं चैव रौद्रं च ऐन्द्रं पाशुपतं तथा ।
ऐषीकं चापि चिक्षेप कुपितो गाधिनन्दनः ॥ ६ ॥
मानवं मोहनं चैव गान्धर्वं स्वापनं तथा ।
जृम्भणं मादनं चैव संतापनविलापने ॥ ७ ॥
शोषणं दारुणं चैव वज्रमस्त्रं सुदुर्जयम् ।
ब्रह्मपाशं कालपाशं वारुणं पाशमेव च ॥ ८ ॥
पैनाकमस्त्रं दयितं शुष्कार्द्रे अशनी तथा ।
दण्डास्त्रमथ पैशाचं क्रौञ्चमस्त्रं तथैव च ॥ ९ ॥
धर्मचक्रं कालचक्रं विष्णुचक्रं तथैव च ।
वायव्यं मथनं चैव अस्त्रं हयशिरस्तथा ॥ १० ॥
शक्तिद्वयं च चिक्षेप कङ्कालमुसलं तथा ।
वैद्याधरं महास्त्रं च कालास्त्रमथ दारुणम् ॥ ११ ॥
त्रिशूलमस्त्रं घोरं च कापालमथ कङ्कणम् ।
एतान्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन ॥ १२ ॥
वसिष्ठे जपतां श्रेष्ठे तदद्भुतमिवाभवत् ।
तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणः सुतः ।
तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान्गाधिनन्दनः ॥ १३ ॥
तदस्त्रमुद्यतं दृष्ट्वा देवाः साग्निपुरोगमाः ।
देवर्षयश्च संभ्रान्ता गन्धर्वाः समहोरगाः ।
त्रैलोक्यमासीत्संत्रस्तं ब्रह्मास्त्रे समुदीरिते ॥ १४ ॥
तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा ।
वसिष्ठो ग्रसते सर्वं ब्रह्मदण्डेन राघव ॥ १५ ॥

ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः ।
त्रैलोक्यमोहनं रौद्रं रूपमासीत्सुदारुणम् ॥ १६ ॥
रोमकूपेषु सर्वेषु वसिष्ठस्य महात्मनः ।
मरीच्य इव निष्पेतुरग्नेर्धूमाकुलार्चिषः ॥ १७ ॥
प्राज्वलद्ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः ।
सधूम इव कालाग्निर्यमदण्ड इवापरः ॥ १८ ॥
ततोऽस्तुवन्मुनिगणा वसिष्ठं जपतां वरम् ।
अमोघं ते बलं ब्रह्मंस्तेजो धारय तेजसा ॥ १९ ॥
निगृहीतस्त्वया ब्रह्मन्विश्वामित्रो महाबलः ।
प्रसीद जपतां श्रेष्ठ लोकाः सन्तु गतव्यथाः ॥ २० ॥
एवमुक्तो महातेजाः शमं चक्रे महातपाः ।
विश्वामित्रोऽपि निकृतो विनिःश्वस्येदमब्रवीत् ॥ २१ ॥
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥ २२ ॥
तदेतत्प्रसमीक्ष्याहं प्रसन्नेन्द्रियमानसः ।
तपो महत्समास्थास्ये यद्वै ब्रह्मत्वकारणम् ॥ २३ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने विश्वामित्रप्रतिज्ञा नाम
षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

ततः संतप्तहृदयः स्मरन्निग्रहमात्मनः ।
विनिःश्वस्य विनिःश्वस्य कृतवैरो महात्मना ॥ १ ॥
स दक्षिणां दिशं गत्वा महिष्या सह राघव ।
फलमूलाशनो दान्तश्चचार परमं तपः ॥ २ ॥
अथास्य जज्ञिरे पुत्राः सत्यधर्मपरायणाः ।
हविष्पन्दो मधुष्पन्दो दृढनेत्रो महारथः ॥ ३ ॥
पूर्णे वर्षसहस्रे तु ब्रह्मा लोकपितामहः ।
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ ४ ॥

जिता राजर्षिलोकास्ते तपसा कुशिकात्मज ।
अनेन तपसा त्वं हि राजर्षिरिति विद्महे ॥ ५ ॥
एवमुक्त्वा महातेजा जगाम सह दैवतैः ।
त्रिविष्टपं ब्रह्मलोकं लोकानां परमेश्वरः ॥ ६ ॥
विश्वामित्रोऽपि तच्छ्रुत्वा ह्रिया किंचिदवाङ्मुखः ।
दुःखेन महताविष्टः समन्युरिदमब्रवीत् ॥ ७ ॥
तपश्च सुमहत्तप्तं राजर्षिरिति मां विदुः ।
देवाः सर्षिगणाः सर्वे नास्ति मन्ये तपःफलम् ॥ ८ ॥
एवं निश्चित्य मनसा भूय एव महातपाः ।
तपश्चचार काकुत्स्थ परमं परमात्मवान् ॥ ९ ॥
एतस्मिन्नेव काले तु सत्यवादी जितेन्द्रियः ।
त्रिशङ्कुरिति विख्यात इक्ष्वाकुकुलवर्धनः ॥ १० ॥
तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव ।
गच्छेयं स्वशरीरेण देवतानां परां गतिम् ॥ ११ ॥
वसिष्ठं च समाहूय कथयामास चिन्तितम् ।
अशक्यमिति चाप्युक्तो वसिष्ठेन महात्मना ॥ १२ ॥
प्रत्याख्यातो वसिष्ठेन स ययौ दक्षिणां दिशम् ।
ततस्तत्कर्मसिद्ध्यर्थं पुत्रांस्तस्य गतो नृपः ॥ १३ ॥
त्रिशङ्कुस्तु महातेजाः शतं परमभास्वरम् ।
वसिष्ठपुत्रान्ददृशे तप्यमानान्मनस्विनः ॥ १४ ॥
सोऽभिगम्य महात्मानः सर्वानेव गुरोः सुतान् ।
अभिवाद्यानुपूर्वेण ह्रिया किंचिदवाङ्मुखः ॥ १५ ॥
अब्रवीत्स महाभागान्सर्वानेव कृताञ्जलिः ।
शरणं वः प्रपन्नोऽहं शरण्याञ्शरणप्रदान् ॥ १६ ॥
प्रत्याख्यातो हि भद्रं वो वसिष्ठेन महात्मना ।
यष्टुकामो महायज्ञं तदनुज्ञातुमर्हथ ॥ १७ ॥
गुरुपुत्रानहं सर्वान्नमस्कृत्य प्रसादये ।
शिरसा प्रणतो याचे ब्राह्मणांस्तपसि स्थितान् ॥ १८ ॥

ते मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः ।
सशरीरो यथाहं वै देवलोकमवाप्नुयाम् ॥ १९ ॥
प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः ।
गुरुपुत्रानृते सर्वान्नाहं पश्यामि कंचन ॥ २० ॥
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः ।
तस्मादनन्तरं सर्वे भवन्तो दैवतं मम ॥ २१ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने त्रिशङ्कुवाक्यं नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

त्रिशङ्कोर्वचनं श्रुत्वा ततः क्रोधसमन्वितम् ।
ऋषिपुत्रशतं राम राजानमिदमब्रवीत् ॥ १ ॥
प्रत्याख्यातोसि दुर्बुद्धे गुरुणा सत्यवादिना ।
तं कथं समतिक्रम्य शाखान्तरमुपेयिवान् ॥ २ ॥
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः ।
न चातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥ ३ ॥
अशक्यमिति चोवाच वसिष्ठो भगवानृषिः ।
तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ॥ ४ ॥
बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः ।
याजने भगवाञ्छक्तस्त्रैलोक्यस्यापि पार्थिव ॥ ५ ॥
तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरम् ।
स राजा पुनरेवैतानिदं वचनमब्रवीत् ॥ ६ ॥
प्रत्याख्यातो भगवता गुरुपुत्रैस्तथैव हि ।
अन्यां गतिं गमिष्यामि स्वस्ति वोस्तु तपोधनाः ॥ ७ ॥
ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ।
शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि ॥ ८ ॥
इत्युक्त्वा ते महात्मानो विविशुः स्वं स्वमाश्रमम् ।
अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः ॥ ९ ॥

नीलवस्त्रधरो नीलः पुरुषो ध्वस्तमूर्धजः ।
चित्यमाल्याङ्गरागश्च आयसाभरणोभवत् ॥ १० ॥
तं दृष्ट्वा मन्त्रिणः सर्वे त्यज्य चण्डालरूपिणम् ।
प्राद्रवन्सहिता राम पौरा ये चानुयायिनः ॥ ११ ॥
एको हि राजा काकुत्स्थ जगाम परमात्मवान् ।
दह्यमानो दिवारात्रं विश्वामित्रं तपोवनम् ॥ १२ ॥
विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम् ।
चण्डालरूपिणं राम मुनिः कारुण्यमागतः ॥ १३ ॥
कारुण्यात्स महातेजा वाक्यं परमधार्मिकः ।
इदं जगाद भद्रं ते राजानं घोरदर्शनम् ॥ १४ ॥
किमागमनकार्यं ते राजपुत्र महाबल ।
अयोध्याधिपते वीर शापाच्चण्डालतां गतः ॥ १५ ॥
अथ तद्वाक्यमाकर्ण्य राजा चण्डालदर्शनः ।
अब्रवीत्प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम् ॥ १६
प्रत्याख्यातोस्मि गुरुणा गुरुपुत्रैस्तथैव च ।
अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः ॥ १७ ॥
सशरीरो दिवं यायामिति मे सौम्यदर्शनम् ।
मया चेष्टं क्रतुशतं तच्च नावाप्यते फलम् ॥ १८ ॥
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
कृच्छ्रेष्वपि गतः सौम्य क्षत्रधर्मेण ते शपे ॥ १९ ॥
यज्ञैर्बहुविधैरिष्टं प्रजा धर्मेण पालिताः ।
गुरवश्च महात्मानः शीलवृत्तेन तोषिताः ॥ २० ॥
धर्मे प्रयतमानस्य यज्ञं चाहर्तुमिच्छतः ।
परितोषं न गच्छन्ति गुरवो मुनिपुंगव ॥ २१ ॥
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ।
दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः ॥ २२ ॥
तस्य मे परमार्तस्य प्रसादमभिकाङ्क्षतः ।
कर्तुमर्हसि भद्रं ते दैवोपहतकर्मणः ॥ २३ ॥

मान्यां गतिं प्रपश्यामि नान्यच्छरणमस्ति मे ।
दैवं पुरुषकारेण निवर्तयितुमर्हसि ॥ २४ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने त्रिशङ्कुशापो नाम
अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

उक्तवाक्यं तु राजानं कृपया कुशिकात्मजः ।
अब्रवीन्मधुरं वाक्यं साक्षाच्चण्डालतां गतम् ॥ १ ॥
इक्ष्वाको स्वागतं वत्स जानामि त्वां सुधार्मिकम् ।
शरणं ते प्रदास्यामि मा भैषीर्नृपपुंगव ॥ २ ॥
अहमामन्त्रये सर्वान्महर्षीन्पुण्यकर्मणः ।
यज्ञसाह्यकरात्राजंस्ततो यक्ष्यसि निर्वृतः ॥ ३ ॥
गुरुशापकृतं रूपं यदिदं त्वयि वर्तते ।
अनेन सह रूपेण सशरीरो गमिष्यसि ॥ ४ ॥
हस्तप्राप्तमहं मन्ये स्वर्गं तव नराधिप ।
यस्त्वं कौशिकमागम्य शरण्यः शरणं गतः ॥ ५ ॥
एवमुक्त्वा महातेजाः पुत्रान्परमधार्मिकान् ।
व्यादिदेश महाप्राज्ञान्यज्ञसंभारकारणात् ॥ ६ ॥
सर्वाञ्शिष्यान्समाहूय वाक्यमेतदुवाच ह ।
सर्वानृषीन्सवासिष्ठानानयध्वं ममाज्ञया ॥ ७ ॥
यश्च यद्वचनं ब्रूयान्मद्वाक्यबलचोदितः ।
तत्सर्वमखिलेनोक्तं ममाख्येयमनादृतम् ॥ ८ ॥
तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया ।
आजग्मुरथ देशेभ्यः सर्वेभ्यो ब्रह्मवादिनः ॥ ९ ॥
ते च शिष्याः समागम्य मुनिं ज्वलिततेजसम् ।
अब्रुवन्वचनं सर्वं सर्वेषां ब्रह्मवादिनाम् ॥ १० ॥
श्रुत्वा ते वचनं सर्वे समायान्ति द्विजातयः ।
सर्वदेशेषु चागच्छन्वर्जयित्वा महोदयम् ॥ ११ ॥

वासिष्ठं तच्छ्रुतं सर्वं क्रोधपर्याकुलाक्षरम् ।
यदुवाच वचो घोरं शृणु त्वं मुनिपुंगव ॥ १२ ॥
क्षत्रियो याजको यस्य चाण्डालस्य विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥ १३ ॥
ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम् ।
कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः ॥ १४ ॥
एतद्वचननैष्ठुर्यमूचुः संरक्तलोचनाः ।
वासिष्ठा मुनिशार्दूल सर्वे सह महोदयाः ॥ १५ ॥
इति तेषां वचः श्रुत्वा शिष्याणां मुनिपुंगवः ।
क्रोधसंरक्तनयनः सरोषमिदमब्रवीत् ॥ १६ ॥
यद्दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् ।
भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः ॥ १७ ॥
अद्य ते कालपाशेन नीता वैवस्वतक्षयम् ।
सप्त जातिशतान्येव मृतपाः संभवन्तु ते ॥ १८ ॥
श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः ।
विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् ॥ १९ ॥
महोदयश्च दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् ।
दूषितः सर्वलोकेषु निषादत्वं गमिष्यति ॥ २० ॥
प्राणातिपातनिरतो निरनुक्रोशतां गतः ।
दीर्घकालं मम क्रोधाद्दुर्गतिं वर्तयिष्यति ॥ २१ ॥
एतावदुक्त्वा वचनं विश्वामित्रो महामुनिः ।
विरराम महातेजास्तस्मिन्मुनिसमागमे ॥ २२ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने वासिष्ठशापो नाम एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

तपोबलहतान्कृत्वा वासिष्ठान्स महोदयान् ।
ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥

अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः ।
धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः ॥ २ ॥
यथायं स्वशरीरेण देवलोके गमिष्यति ।
तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह ॥ ३ ॥
विश्वामित्रवचः श्रुत्वा ततस्ते मुनिपुंगवाः ।
मिथः संमन्त्रयामासुर्विश्वामित्रभयार्दिताः ॥ ४ ॥
अथ कुशिकदायादो मुनिः परमकोपनः ।
यदाह वचनं सम्यगेतत्कार्यं न संशयः ॥ ५ ॥
अग्निकल्पो हि भगवाञ्छापं दास्यति रोषितः ।
तस्मात्प्रवर्त्यतां यज्ञो यथैवोक्तं महर्षिणा ॥ ६ ॥
क्रियतां च तथा यत्नः सशरीरो यथा दिवम् ।
गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ॥ ७ ॥
ततः प्रववृते यज्ञः सर्वसंभारसंभृतः ।
याजकश्च महातेजा विश्वामित्रोऽभवत्क्रतौ ॥ ८ ॥
ऋत्विजश्चानुपूर्वेण मन्त्रवन्मन्त्रकोविदाः ।
चक्रुः सर्वाणि कर्माणि यथाकल्पं यथाविधि ॥ ९ ॥
ततः कालेन महता विश्वामित्रो महातपाः ।
चकारावाहनं तत्र भागार्थं सर्वदेवताः ॥ १० ॥
नाभ्यागमन्यदा तत्र भागार्थं सर्वदेवताः ।
ततः कोपसमाविष्टो विश्वामित्रो महामुनिः ।
स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत् ॥ ११ ॥
पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर ।
एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ।
दुष्प्रापं स्वशरीरेण स्वर्गं गच्छ नरेश्वर ॥ १२ ॥
स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलम् ।
राजंस्त्वं तेजसा तस्य सशरीरो दिवं व्रज ॥ १३ ॥
उक्तवाक्ये मुनौ तस्मिन्सशरीरो नरेश्वरः ।
दिवं जगाम काकुत्स्थ मुनीनां पश्यतां तदा ॥ १४ ॥

स्वर्गलोकं गतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ।
सह सर्वैः सुरगणैरिदं वचनमब्रवीत् ॥ १५ ॥
त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः ।
गुरुशापहतो मूढ पत भूमिमवाक्शिराः ॥ १६ ॥
एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत्पुनः ।
विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् ॥ १७ ॥
तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ।
रोषमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ १८ ॥
ततो ब्रह्मतपोयोगात्प्रजापतिरिवापरः ।
ससर्ज दक्षिणे भागे सप्तर्षीनपरान्पुनः ॥ १९ ॥
दक्षिणां दिशमास्थाय ऋषिमध्ये महायशाः ।
नक्षत्रमालामपरामसृजत्क्रोधमूर्च्छितः ॥ २० ॥
अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ।
दैवतान्यपि स क्रोधात्स्रष्टुं समुपचक्रमे ॥ २१ ॥
ततः परमसंभ्रान्ताः सर्षिसंघाः सुरासुराः ।
विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥ २२ ॥
अयं राजा महाभाग गुरुशापपरिक्षतः ।
सशरीरो दिवं यातुं नार्हत्यकृतपावनः ॥ २३ ॥
तेषां तद्वचनं श्रुत्वा देवानां मुनिपुंगवः ।
अब्रवीत्सुमहद्वाक्यं कौशिकः सर्वदेवताः ॥ २४ ॥
सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः ।
आरोहणं प्रतिज्ञातं नानृतं कर्तुमुत्सहे ॥ २५ ॥
स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः ।
नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ॥ २६ ॥
यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः ।
मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ॥ २७ ॥
एवमुक्ता सुराः सर्वे प्रत्यूचुर्मुनिपुंगवम् ।
एवं भवतु भद्रं ते तिष्ठन्त्वेतानि सर्वशः ॥ २८ ॥

गगने तान्यनेकानि वैश्वानरपथाद्बहिः ।
नक्षत्राणि मुनिश्रेष्ठ तेषु ज्योतिःषु जाज्वलन् ॥ २९ ॥
अवाक्शिरास्त्रिशङ्कुश्च तिष्ठत्वमरसंनिभः ।
अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमम् ॥ ३० ॥
विश्वामित्रस्तु धर्मात्मा सर्वदेवैरभिष्टुतः ।
ऋषिमध्ये महातेजा बाढमित्याह देवताः ॥ ३१ ॥
ततो देवा महात्मान ऋषयश्च तपोधनाः ।
जग्मुर्यथागतं सर्वे यज्ञस्यान्ते नरोत्तम ॥ ३२ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने त्रिशङ्कुस्वर्गारोहणं नाम षष्टितमः सर्गः ॥ ६० ॥

---

विश्वामित्रो महातेजाः प्रस्थितान्वीक्ष्य तानृषीन् ।
अब्रवीन्नरशार्दूल सर्वांस्तान्वनवासिनः ॥ १ ॥
महाविघ्नः प्रवृत्तोयं दक्षिणामास्थितो दिशम् ।
दिशमन्यां प्रपत्स्यामस्तत्र तप्स्यामहे तपः ॥ २ ॥
पश्चिमस्यां विशालायां पुष्करारण्यमाश्रिताः ।
सुखं तपश्चरिष्यामः परं तद्धि तपोवनम् ॥ ३ ॥
एवमुक्त्वा महातेजाः पुष्करेषु महामुनिः ।
तप उग्रं दुराधर्षं तेपे मूलफलाशनः ॥ ४ ॥
एतस्मिन्नेव काले तु अयोध्याधिपतिर्महान् ।
अम्बरीष इति ख्यातो यष्टुं समुपचक्रमे ॥ ५ ॥
तस्य वै यजमानस्य पशुमिन्द्रो जहार ह ।
प्रणष्टे तु पशौ विप्रो राजानमिदमब्रवीत् ॥ ६ ॥
पशुरत्र हृतो राजन्प्रणष्टस्तव दुर्नयात् ।
अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर ॥ ७ ॥
प्रायश्चित्तं महद्ध्येतन्नरं वा पुरुषर्षभ ।
आनयस्व पशुं शीघ्रं यावत्कर्म प्रवर्तते ॥ ८ ॥
उपाध्यायवचः श्रुत्वा इक्ष्वाकुः सोमितप्रभः ।
अन्वियेष महाबुद्धिः पशुं गोभिः सहस्रशः ॥ ९ ॥

देशाञ्जनपदांस्तांस्तान्नगराणि वनानि च ।
आश्रमाणि च पुण्यानि मार्गमाणो महीपतिः ॥ १० ॥
स पुत्रसहितं तात सभार्यं रघुनन्दन ।
भृगुतुङ्गे समासीनमृचीकं संददर्श ह ॥ ११ ॥
अम्बरीषो महातेजाः प्रणम्याभिप्रसाद्य च ।
ब्रह्मर्षिं तपसा दीप्तं राजर्षिरिदमब्रवीत् ॥ १२ ॥
गवां शतसहस्रेण विक्रीणीषे सुतं यदि ।
पशोरर्थे महाभाग कृतकृत्योस्मि भार्गव ॥ १३ ॥
सर्वे परिगता देशा यज्ञियं न लभे पशुम् ।
दातुमर्हसि मूल्येन सुतमेकमितो मम ॥ १४ ॥
एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः ।
नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथंचन ॥ १५ ॥
ऋचीकवचनं श्रुत्वा तेषां माता महात्मनाम् ।
उवाच नरशार्दूलमम्बरीषमिदं वचः ॥ १६ ॥
अविक्रेयं सुतं ज्येष्ठं भगवानाह भार्गवः ।
ममापि दयितं विद्धि कनिष्ठं शुनकं प्रभो ॥ १७ ॥
प्रायेण हि नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः ।
मातॄणां च कनीयांसस्तस्माद्रक्षे कनीयसम् ॥ १८ ॥
उक्तवाक्ये मुनौ तस्मिन्मुनिपत्न्यां तथैव च ।
शुनःशेपः स्वयं राम मध्यमो वाक्यमब्रवीत् ॥ १९ ॥
पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम् ।
विक्रीतं मध्यमं मन्ये राजपुत्र नयस्व माम् ॥ २० ॥
गवां शतसहस्रेण शुनःशेपं ततो नृपः ।
गृहीत्वा परमप्रीतो जगाम रघुनन्दन ॥ २१ ॥
रथमारोप्य तं राम शुनःशेपं त्वरान्वितः ।
आजगाम ततो यज्ञं समापयितुमात्मनः ॥ २२ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने शुनःशेपविक्रयो नाम एकषष्टितमः सर्गः ॥ ६१ ॥

शुनःशेपं तमादाय स राजा श्रान्तवाहनः ।
व्यश्राम्यत्पुष्करे तीर्थे मध्याह्ने रघुनन्दन ॥ १ ॥
तस्य विश्राम्यतस्तत्र शुनःशेपो महाद्युतिः ।
पुष्करं ज्येष्ठमागम्य विश्वामित्रं ददर्श ह ॥ २ ॥
तप्यन्तमृषिभिः सार्धं मातुलं परमातुरः ।
विषण्णवदनो दीनस्तृष्णया च श्रमेण च ॥ ३ ॥
पपाताङ्के मुने राम वाक्यं चेदमुवाच ह ।
न मेऽस्ति माता न पिता ज्ञातयो बान्धवाः कुतः ॥ ४ ॥
त्रातुमर्हसि मा सौम्य धर्मेण मुनिपुंगव ।
त्राता त्वं हि नरश्रेष्ठ सर्वेषां त्वं हि भावनः ॥ ५ ॥
राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः ।
स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा ह्यनुत्तमम् ॥ ६ ॥
स मे नाथो ह्यनाथस्य भव भव्येन चेतसा ।
पितेव पुत्रं धर्मात्मंस्त्रातुमर्हसि किल्बिषात् ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः ।
सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ॥ ८ ॥
यत्कृते पितरः पुत्राञ्जनयन्ति शुभार्थिनः ।
परलोकहितार्थाय तस्य कालोऽयमागतः ॥ ९ ॥
अयं मुनिसुतो बालो मत्तः शरणमिच्छति ।
अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ॥ १० ॥
सर्वे सुकृतकर्माणः सर्वे धर्मपरायणाः ।
पशुभूता नरेन्द्रस्य तृप्तिमग्नेः प्रयच्छत ॥ ११ ॥
नाथवांश्च शुनःशेपो यज्ञश्चाविघ्नितो भवेत् ।
देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः ॥ १२ ॥
मुनेस्तु वचनं श्रुत्वा मधुष्यन्दादयः सुताः ।
साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥ १३ ॥
कथमात्मसुतान्हित्वा त्रायसेऽन्यसुतान्विभो ।
अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥ १४ ॥

तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुंगवः ।
क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥ १५ ॥
निःसाध्वसमिदं प्रोक्तं धर्मादपि विगर्हितम् ।
अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणम् ॥ १६ ॥
श्वमांसभोजनाः सर्वे वासिष्ठा इव जातिषु ।
पूर्णवर्षसहस्रं तु पृथिव्यामनुवत्स्यथ ॥ १७ ॥
कृत्वा शापसमायुक्तान्पुत्रान्मुनिवरस्तदा ।
शुनःशेपमुवाचार्तं कृत्वा रक्षां निरामयाम् ॥ १८ ॥
पवित्रपाशैराबद्धो रक्तमाल्यानुलेपनः ।
वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहर ॥ १९ ॥
इमे च गाथे द्वे दिव्ये गायेथा मुनिपुत्रक ।
अम्बरीषस्य यज्ञेऽस्मिंस्ततः सिद्धिमवाप्स्यसि ॥ २० ॥
शुनःशेपो गृहीत्वा ते द्वे गाथे सुसमाहितः ।
त्वरया राजसिंहं तमम्बरीषमुवाच ह ॥ २१ ॥
राजसिंह महाबुद्धे शीघ्रं गच्छामहे वयम् ।
निवर्तयस्व राजेन्द्र दीक्षां च समुपाविश ॥ २२ ॥
तद्वाक्यमृषिपुत्रस्य श्रुत्वा हर्षसमन्वितः ।
जगाम नृपतिः शीघ्रं यज्ञवाटमतन्द्रितः ॥ २३ ॥
सदस्यानुमते राजा पवित्रकृतलक्षणम् ।
पशुं रक्ताम्बरं कृत्वा यूपे तं समबन्धयत् ॥ २४ ॥
स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ ।
इन्द्रमिन्द्रानुजं चैव यथावन्मुनिपुत्रकः ॥ २५ ॥
ततः प्रीतः सहस्राक्षो रहस्यस्तुतितोषितः ।
दीर्घमायुस्तदा प्रादाच्छुनःशेपाय वासवः ॥ २६ ॥
स च राजा नरश्रेष्ठ तस्य यज्ञस्य लब्धवान् ।
फलं बहुगुणं राम सहस्राक्षप्रसादजम् ॥ २७ ॥

विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महत्तपः ।
पुष्करेष्वेव वर्षाणां सहस्रं नियतव्रतः ॥ २८ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने अम्बरीषयज्ञो नाम
द्विषष्टितमः सर्गः ॥ ६२ ॥

---

पूर्णे वर्षसहस्रे तु व्रतस्नातं महामुनिम् ।
अभ्यागच्छन्सुराः सर्वे तपःफलचिकीर्षवः ॥ १ ॥
तत्रैनमब्रवीद्ब्रह्मा पुनः सुरुचिरं वचः ।
ऋषिस्त्वमसि भद्रं ते स्वार्जितैः कर्मभिः शुभैः ॥ २ ॥
तमेवमुक्त्वा देवेशस्त्रिदिवं पुनरभ्यगात् ।
विश्वामित्रोऽपि तच्छ्रुत्वा भूयस्तेपे महत्तपः ॥ ३ ॥
ततः कालेन महता मेनका परमाप्सराः ।
पुष्करेषु नरश्रेष्ठ स्नातुं समुपचक्रमे ॥ ४ ॥
तां ददर्श महातेजा मेनकां कुशिकात्मजः ।
रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा ॥ ५ ॥
तां दृष्ट्वा चारुसर्वाङ्गीं मेनकां विजने वने ।
कन्दर्पवशगोऽभ्येत्य मुनिर्वचनमब्रवीत् ॥ ६ ॥
अप्सरः स्वागतं तेऽस्तु वस चेह ममाश्रमे ।
अनुगृह्णीष्व भद्रं ते मदनेन विमोहितम् ॥ ७ ॥
इत्युक्ता सा वरारोहा तत्र वासमथाकरोत् ।
तपसो हि महाविघ्नो विश्वामित्रमुपागमत् ॥ ८ ॥
तस्यां वसन्त्यां वर्षाणि पञ्च पञ्च च राघव ।
विश्वामित्राश्रमे सौम्ये सुखेन व्यतिचक्रमुः ॥ ९ ॥
अथ काले गते तस्मिन्विश्वामित्रो महामुनिः ।
सव्रीड इव संवृत्तश्चिन्ताशोकपरायणः ॥ १० ॥
बुद्धिर्मुनेः समुत्पन्ना सामर्षा रघुनन्दन ।
सर्वं सुराणां कर्मैतत्तपोऽपहरणं महत् ॥ ११ ॥

अहोरात्रापदेशेन गताः संवत्सरा दश ।
काममोहाभिभूतस्य विघ्नोयं प्रत्युपस्थितः ॥ १२ ॥
स निःश्वसन्मुनिवरः पश्चात्तापेन दुःखितः ।
भीतामप्सरसं दृष्ट्वा वेपन्तीं प्राञ्जलिं स्थिताम् ॥ १३ ॥
मेनकां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः ।
उत्तरं पर्वतं राम विश्वामित्रो जगाम ह ॥ १४ ॥
स कृत्वा नैष्ठिकीं बुद्धिं जेतुकामो महायशाः ।
कौशिकीतीरमासाद्य तपस्तेपे दुरासदम् ॥ १५ ॥
तस्य वर्षसहस्राणि घोरं तप उपासतः ।
उत्तरे पर्वते राम देवतानामभूद्भयम् ॥ १६ ॥
अमन्त्रयन्समागम्य सर्वे सर्षिगणाः सुराः ।
महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ॥ १७ ॥
देवतानां वचः श्रुत्वा सर्वलोकपितामहः ।
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ १८ ॥
महर्षे स्वागतं वत्स तपसोग्रेण तोषितः ।
महत्त्वमृषिमुख्यत्वं ददामि तव कौशिक ॥ १९ ॥
ब्रह्मणस्तद्वचः श्रुत्वा विश्वामित्रस्तपोधनः ।
न विषण्णो न संतुष्टः प्रत्युवाच पितामहम् ॥ २० ॥
ब्रह्मर्षिशब्दमतुलं स्वार्जितैः कर्मभिः शुभैः ।
यदि मे भगवानाह ततोहं विजितेन्द्रियः ॥ २१ ॥
तमुवाच ततो ब्रह्मा न तावत्त्वं जितेन्द्रियः ।
यतस्व मुनिशार्दूल इत्युक्त्वा स दिवं गतः ॥ २२ ॥
विश्वामित्रोपि तत्रैव तेपे घोरतरं तपः ।
ऊर्ध्वबाहुर्निरालम्ब एकपादप्रतिष्ठितः ॥ २३ ॥
वायुभक्षः स्थितः स्थाने एकस्मिन्स्थाणुवत्स्थिरः ।
घर्मे पञ्चतपा भूत्वा वर्षास्वभ्रावकाशकः ॥ २४ ॥
शिशिरे सलिले शायी रात्र्यहानि तपोधनः ।
एवं वर्षसहस्रं हि तपो घोरमुपागमत् ॥ २५ ॥

तस्मिन्संतप्यमाने तु विश्वामित्रे महामुनौ ।
संतापः सुमहानासीत्सुराणां वासवस्य च ॥ २६ ॥
संभ्रमं परमास्थाय ततः शक्रः सुराधिपः ।
चिन्तयित्वा तपोविघ्नमुपायं रघुनन्दन ॥ २७ ॥
आहूयाप्सरसं रम्भां मरुद्गणावृतः प्रभुः ।
उवाचात्महितं वाक्यमहितं कौशिकस्य च ॥ २८ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने मेनकानिर्वासो नाम त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

सुरकार्यमिदं रम्भे कर्तव्यं सुमहत्त्वया ।
लोभनं कौशिकस्येह काममोहसमन्वितम् ॥ १ ॥
तथोक्ता साप्सरा राम सहस्राक्षेण धीमता ।
व्रीडिता प्राञ्जलिर्वाक्यं प्रत्युवाच सुरेश्वरम् ॥ २ ॥
अयं सुरपते घोरो विश्वामित्रो महामुनिः ।
क्रोधमुत्स्रक्ष्यते क्रूरं मयि देव न संशयः ।
ततो हि मे भयं देव प्रसादं कर्तुमर्हसि ॥ ३ ॥
एवमुक्तस्तया राम सभयं भीतया तदा ।
तामुवाच सहस्राक्षो वेपमानां कृताञ्जलिम् ॥ ४ ॥
मा भैषी रम्भे भद्रं ते कुरुष्व मम शासनम् ।
कोकिलो हृदयग्राही माधवे रुचिरद्रुमे ।
अहं कन्दर्पसहितः स्थास्यामि तव पार्श्वतः ॥ ५ ॥
त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम् ।
तमृषिं कौशिकं रम्भे भेदयस्व तपस्विनम् ॥ ६ ॥
सा श्रुत्वा वचनं तस्य कृत्वा रूपमनुत्तमम् ।
लोभयामास ललिता विश्वामित्रं शुचिस्मिता ॥ ७ ॥
कोकिलस्य तु शुश्राव वल्गु व्याहरतः स्वनम् ।
संप्रहृष्टेन मनसा स चैनामन्ववैक्षत ॥ ८ ॥

अथ तस्य च शब्देन गीतेनाप्रतिमेन च ।
दर्शनेन च रम्भाया मुनिः संदेहमागतः ॥ ९ ॥
सहस्राक्षस्य तत्सर्वं विज्ञाय मुनिपुंगवः ।
रम्भां क्रोधसमाविष्टः शशाप कुशिकात्मजः ॥ १० ॥
यन्मां लोभयसे रम्भे कामक्रोधजयैषिणम् ।
दश वर्षसहस्राणि शैली स्थास्यसि दुर्भगे ॥ ११ ॥
ब्राह्मणः सुमहातेजास्तपोबलसमन्वितः ।
उद्धरिष्यति रम्भे त्वां मत्क्रोधकलुषीकृताम् ॥ १२ ॥
एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः ।
अशक्नुवन्धारयितुं कोपं संतापमागतः ॥ १३ ॥
तस्य शापेन महता रम्भा शैली तदाभवत् ।
वचः श्रुत्वा तु कन्दर्पो महर्षेः स च निर्गतः ॥ १४ ॥
कोपेन च महातेजास्तपोपहरणे कृते ।
इन्द्रियैरजितै राम न लेभे शान्तिमात्मनः ॥ १५ ॥
बभूवास्य मनश्चिन्ता तपोपहरणे कृते ।
नैव क्रोधं गमिष्यामि न च वक्ष्ये कथंचन ।
अथवा नोच्छ्वसिष्यामि संवत्सरशतान्यपि ॥ १६ ॥
अहं हि शोषयिष्यामि आत्मानं विजितेन्द्रियः ।
तावद्यावद्धि मे प्राप्तं ब्राह्मण्यं तपसार्जितम् ॥ १७ ॥
अनुच्छ्वसन्नभुञ्जानस्तिष्ठेयं शाश्वतीः समाः ।
न हि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः ॥ १८ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने रम्भाशापो नाम
चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

अथ हैमवतीं राम दिशं त्यक्त्वा महामुनिः ।
पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम् ॥ १ ॥
मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमम् ।
चकाराप्रतिमं लोके तपः परमदुष्करम् ॥ २ ॥

पूर्णे वर्षसहस्रे तु काष्ठभूतं महामुनिम् ।
विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ।
स कृत्वा निश्चयं राम तप आतिष्ठताव्ययम् ॥ ३ ॥
तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ।
भोक्तुमारब्धवानन्नं तस्मिन्काले रघूत्तम ।
इन्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत ॥ ४ ॥
तस्मै दत्त्वा तदा सिद्धं सर्वं विप्राय निश्चितः ।
निःशेषितेऽन्ने भगवानभुक्त्वैव महातपाः ॥ ५ ॥
न किंचिदवदद्विप्रं मौनव्रतमुपास्थितः ।
तथैव मौनमकरोदनुच्छ्वासं च राघव ॥ ६ ॥
तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत ।
त्रैलोक्यं येन संभ्रान्तमादीपितमिवाभवत् ॥ ७ ॥
ततो देवर्षिगन्धर्वाः पन्नगोरगराक्षसाः ।
कश्मलोपहताः सर्वे पितामहमथाब्रुवन् ॥ ८ ॥
बहुभिः कारणैर्देव विश्वामित्रो महामुनिः ।
लोभितः क्रोधितश्चैव तपसा चाभिवर्धते ॥ ९ ॥
न दीयते यदि त्वस्य मनसा यदभीप्सितम् ।
विनाशयति त्रैलोक्यं तपसा सचराचरम् ॥ १० ॥
व्याकुलाश्च दिशः सर्वा न च किंचित्प्रकाशते ।
सागराः क्षुभिताः सर्वे विशीर्यन्ते च पर्वताः ॥ ११ ॥
प्रकम्पते च पृथिवी वायुर्वातीह सङ्कुलः ।
ब्रह्मन्न प्रतिजानीमो नास्तिको जायते जनः ॥ १२ ॥
संमूढमिव त्रैलोक्यं संप्रक्षुभितमानसम् ।
भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसा ॥ १३ ॥
बुद्धिं न कुरुते यावन्नाशे देव महामुनिः ।
तावत्प्रसाद्यो भगवानग्निरूपो महाद्युतिः ॥ १४ ॥
कालाग्निना यथा पूर्वं त्रैलोक्यं दह्यतेऽखिलम् ।
देवराज्यं चिकीर्षेत दीयतामस्य यन्मतम् ॥ १५ ॥

ततः सुरगणाः सर्वे पितामहपुरोगमाः ।
विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् ॥ १६ ॥
ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ।
ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ॥ १७ ॥
दीर्घमायुश्च ते ब्रह्मन्ददामि समरुद्गणः ।
स्वस्ति प्राप्नुहि भद्रं ते गच्छ सौम्य यथासुखम् ॥ १८ ॥
पितामहवचः श्रुत्वा सर्वेषां त्रिदिवौकसाम् ।
कृत्वा प्रणामं मुदितो व्याजहार महामुनिः ॥ १९ ॥
ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च ।
ओंकारोथ वषट्कारो वेदाश्च वरयन्तु माम् ॥ २० ॥
क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि ।
ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः ॥ २१ ॥
ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः ।
सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ॥ २२ ॥
ब्रह्मर्षित्वं न संदेहः सर्वं संपद्यते तव ।
इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथागतम् ॥ २३ ॥
विश्वामित्रोपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् ।
पूजयामास ब्रह्मर्षिं वसिष्ठं जपतां वरम् ॥ २४ ॥
कृतकामो महीं सर्वां चचार तपसि स्थितः ।
एवं त्वनेन ब्राह्मण्यं प्राप्तं राम महात्मना ॥ २५ ॥
एष राम मुनिश्रेष्ठ एष विग्रहवत्तपः ।
एष धर्मपरो नित्यं वीर्यस्यैष परायणम् ॥ २६ ॥
एवमुक्त्वा महातेजा विरराम द्विजोत्तमः ।
अपूजयच्छतानन्दं साधु साध्विति कौशिकः ॥ २७ ॥
शतानन्दवचः श्रुत्वा रामलक्ष्मणसंनिधौ ।
जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् ॥ २८ ॥
धन्योस्म्यनुगृहीतोस्मि यस्य मे मुनिपुंगव ।
यज्ञं काकुत्स्थसहितः प्राप्तवानसि धार्मिक ॥ २९ ॥

पावितोऽहं त्वया ब्रह्मन्दर्शनेन महामुने ।
गुणा बहुविधाः प्राप्तास्तव संदर्शनान्मया ॥ ३० ॥
विस्तरेण च वै ब्रह्मन्कीर्त्यमानं महत्तपः ।
श्रुतं मया महातेजो रामेण च महात्मना ॥ ३१ ॥
अप्रमेयं तपस्तुभ्यमप्रमेयं च ते बलम् ।
अप्रमेया गुणाश्चैव नित्यं ते कुशिकात्मज ॥ ३२ ॥
तृप्तिराश्चर्यभूतानां कथानां नास्ति मे विभो ।
कर्मकालो मुनिश्रेष्ठ लम्बते रविमण्डलम् ॥ ३३ ॥
श्वः प्रभाते महातेजो द्रष्टुमर्हसि मां पुनः ।
स्वागतं तपसां श्रेष्ठ मामनुज्ञातुमर्हसि ॥ ३४ ॥
एवमुक्तो मुनिवरः प्रशस्य पुरुषर्षभम् ।
विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा ॥ ३५ ॥
एवमुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः ।
प्रदक्षिणं चकाराशु सोपाध्यायः सबान्धवः ॥ ३६ ॥
विश्वामित्रोऽपि धर्मात्मा सहरामः सलक्ष्मणः ।
स्ववाटमभिचक्राम पूज्यमानो महात्मभिः ॥ ३७ ॥

इति बालकाण्डे विश्वामित्रोपाख्याने विश्वामित्रब्रह्मत्वप्राप्तिर्नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

ततः प्रभाते विमले कृतकर्मा नराधिपः ।
विश्वामित्रं महात्मानमाजुहाव सराघवम् ॥ १ ॥
तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा ।
राघवौ च महात्मानौ तदा वाक्यमुवाच ह ॥ २ ॥
भगवन्स्वागतं तेऽस्तु किं करोमि तवानघ ।
भवानाज्ञापयतु मामाज्ञाप्यो भवता ह्यहम् ॥ ३ ॥
एवमुक्तः स धर्मात्मा जनकेन महात्मना ।
प्रत्युवाच मुनिर्वीरं वाक्यं वाक्यविशारदः ॥ ४ ॥

पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।
द्रष्टुकामौ धनुः श्रेष्ठं यदेतत्त्वयि तिष्ठति ॥ ५ ॥
एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ ।
दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ॥ ६ ॥
एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।
श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ॥ ७ ॥
देवरात इति ख्यातो निमेः षष्ठो महीपतिः ।
न्यासोऽयं तस्य भगवन्हस्ते दत्तो महात्मनः ॥ ८ ॥
दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् ।
विध्वस्य त्रिदशान्रुद्रः सलीलमिदमब्रवीत् ॥ ९ ॥
यस्माद्भागार्थिनो भागान्नाकल्पयत मे सुराः ।
वराङ्गानि महार्हाणि धनुषा शातयामि वः ॥ १० ॥
ततो विमनसः सर्वे देवा वै मुनिपुंगव ।
प्रासादयन्त देवेशं तेषां प्रीतोऽभवद्भवः ॥ ११ ॥
प्रीतश्चापि ददौ तेषां तान्यङ्गानि महौजसाम् ।
धनुषा यानि यान्यासञ्छातितानि महात्मना ॥ १२ ॥
तदेतद्देवदेवस्य धनूरत्नं महात्मनः ।
न्यासभूतं तदा न्यस्तमस्माकं पूर्वके विभो ॥ १३ ॥
अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः ।
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥ १४ ॥
भूतलादुत्थिता सा तु वर्धमाना ममात्मजा ।
वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा ॥ १५ ॥
भूतलादुत्थितां तां तु वर्धमानां ममात्मजाम् ।
वरयामासुरागम्य राजानो मुनिपुंगव ॥ १६ ॥
तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ।
वीर्यशुल्केति भगवन्न ददामि सुतामहम् ॥ १७ ॥
ततः सर्वे नृपतयः समेत्य मुनिपुंगव ।
मिथिलामभ्युपागम्य वीर्यं जिज्ञासवस्तदा ॥ १८ ॥

तेषां जिज्ञासमानानां शैवं धनुरुपाहृतम् ।
न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा ॥ १९ ॥
तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने ।
प्रत्याख्याता नृपतयस्तन्निबोध तपोधन ॥ २० ॥
ततस्तेनैव कोपेन राजानः सुमहाबलाः ।
न्यरुन्धन्मिथिलां सर्वे वीर्यसंदेहमागताः ॥ २१ ॥
आत्मानमवधूतं ते विज्ञाय नृपपुंगवाः ।
रोषेण महताविष्टाः पीडयन्मिथिलां पुरीम् ॥ २२ ॥
ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ।
साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः ॥ २३ ॥
ततो देवगणान्सर्वांस्तपसाहं प्रसादयम् ।
ददुश्च परमप्रीताश्चतुरङ्गबलं सुराः ॥ २४ ॥
ततो भग्ना नृपतयो हन्यमाना दिशो ययुः ।
अवीर्या वीर्यसंदिग्धाः सामात्याः पापकारिणः ॥ २५ ॥
तदेतन्मुनिशार्दूल धनुः परमभास्वरम् ।
रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत ॥ २६ ॥
यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।
सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥ २७ ॥

**इति बालकाण्डे जनकवाक्यं नाम षट्षष्टितमः सर्गः ॥ ६६ ॥**

---

जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः ।
धनुर्दर्शय रामाय इति होवाच पार्थिवम् ॥ १ ॥
ततः स राजा जनकः सचिवान्व्यादिदेश ह ।
धनुरानीयतां दिव्यं गन्धमाल्यविभूषितम् ॥ २ ॥
जनकेन समादिष्टाः सचिवाः प्राविशन्पुरीम् ।
तद्धनुः पुरतः कृत्वा निर्जग्मुः पार्थिवाज्ञया ॥ ३ ॥
नृणां शतानि पञ्चाशद्व्यायतानां महौजसाम् ।
मञ्जूषामष्टचक्रस्थां समूहुस्ते कथंचन ॥ ४ ॥

तामानीय तु मञ्जूषामायसीं यत्र तद्धनुः ।
सुरोपमं ते जनकमूचुर्नृपतिमन्त्रिणः ॥ ५ ॥
इदं धनुर्वरं राजन्पूजितं सर्वराजभिः ।
मिथिलाधिप राजेन्द्र दर्शनीयं यदीच्छसि ॥ ६ ॥
तेषां नृपो वचः श्रुत्वा कृताञ्जलिरभाषत ।
विश्वामित्रं महात्मानं तौ चोभौ रामलक्ष्मणौ ॥ ७ ॥
इदं धनुर्वरं ब्रह्मञ्जनकैरभिपूजितम् ।
राजभिश्च महावीर्यैरशक्यं पूरितुं तदा ॥ ८ ॥
नैतत्सुरगणाः सर्वे नासुरा न च राक्षसाः ।
गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ ९ ॥
क्व गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे ।
आरोपणे समायोगे वेपने तोलनेऽपि वा ॥ १० ॥
तदेतद्धनुषां श्रेष्ठमानीतं मुनिपुंगव ।
दर्शयैतन्महाभाग अनयो राजपुत्रयोः ॥ ११ ॥
विश्वामित्रः स धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥ १२ ॥
महर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः ।
मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ॥ १३ ॥
इदं धनुर्वरं दिव्यं संस्पृशामीह पाणिना ।
यत्नवांश्च भविष्यामि तोलने पूरणेऽपि वा ॥ १४ ॥
बाढमित्यब्रवीद्राजा मुनिश्च समभाषत ।
लीलया ॥ धनुर्मध्ये जग्राह वचनान्मुनेः ॥ १५ ॥
पश्यतां नृसहस्राणां बहूनां रघुनन्दनः ।
आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः ॥ १६ ॥
आरोपयित्वा मौर्वीं च पूरयामास वीर्यवान् ।
तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ १७ ॥
तस्य शब्दो महानासीन्निर्घातसमनि-स्वनः ।
भूमिकम्पश्च सुमहान्पर्वतस्येव दीर्यतः ॥ १८ ॥

निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥ १९ ॥
प्रत्याश्वस्ते जने तस्मिन्राजा विगतसाध्वसः ।
उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुंगवम् ॥ २० ॥
भगवन्दृष्टवीर्यो मे रामो दशरथात्मजः ।
अत्यद्भुतमचिन्त्यं च अतर्कितमिदं मया ॥ २१ ॥
जनकानां कुले कीर्तिमाहरिष्यति मे सुता ।
सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥ २२ ॥
मम सत्या प्रतिज्ञा च वीर्यशुल्केति कौशिक ।
सीता प्राणैर्बहुमता देया रामाय मे सुता ॥ २३ ॥
भवतोऽनुमते ब्रह्मञ्शीघ्रं गच्छन्तु मन्त्रिणः ।
मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ॥ २४ ॥
राजानं प्रश्रितैर्वाक्यैरानयन्तु पुरं मम ।
प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥ २५ ॥
मुनिगुप्तौ च काकुत्स्थौ वेदयन्तु नृपाय वै ।
प्रीतियुक्तं तु राजानमानयन्तु सुशीघ्रगाः ॥ २६ ॥
कौशिकस्तु तथेत्याह राजा चाभाष्य मन्त्रिणः ।
अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ॥ २७ ॥
इति बालकाण्डे धनुर्भङ्गो नाम सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः ।
मार्गे त्रिरात्रमुषिता अयोध्यां प्राविशन्पुरीम् ॥ १ ॥
ते राजवचनाद्दूता राजवेश्म प्रवेशिताः ।
ददृशुर्देवसंकाशं वृद्धं दशरथं नृपम् ॥ २ ॥
बद्धाञ्जलिपुटाः सर्वे दूता विगतसाध्वसाः ।
राजानं प्रश्रितं वाक्यमब्रुवन्मधुराक्षरम् ॥ ३ ॥
वैदेहो जनको राजा पृच्छति त्वां नराधिप ।
कुशलानामयं स्निग्धं सामात्यं सपुरोहितम् ॥ ४ ॥

पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः ।
कौशिकानुमते वाक्यं भवन्तमिदमब्रवीत् ॥ ५ ॥
पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा ।
राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः ॥ ६ ॥
सेयं मम सुता राजन्विश्वामित्रपुरःसरैः ।
यदृच्छयागतैर्वीरैर्निर्जिता तव पुत्रकैः ॥ ७ ॥
तच्च रत्नं धनुर्दिव्यं मध्ये भग्नं महात्मना ।
रामेण हि महाबाहो महत्यां जनसंसदि ॥ ८ ॥
अस्मै देया मया सीता वीर्यशुल्का महात्मने ।
प्रतिज्ञां तर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥ ९ ॥
सोपाध्यायो महाराज पुरोहितपुरस्कृतः ।
शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवम् ॥ १० ॥
प्रतिज्ञां मम राजेन्द्र निर्वर्तयितुमर्हसि ।
पुत्रयोरुभयोरेव प्रीतिं त्वमुपलप्स्यसे ॥ ११ ॥
एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत् ।
विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः ॥ १२ ॥
दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ।
वसिष्ठं वामदेवं च मन्त्रिणश्चैवमब्रवीत् ॥ १३ ॥
गुप्तः कुशिकपुत्रेण कौशल्यानन्दवर्धनः ।
लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ ॥ १४ ॥
दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ।
संप्रदानं सुतायाः स राघवे कर्तुमिच्छति ॥ १५ ॥
यदि वो रोचते वृत्तं जनकस्य महात्मनः ।
पुरीं गच्छामहे शीघ्रं मा भूत्कालस्य पर्ययः ॥ १६ ॥
मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः ।
सुप्रीतश्चाब्रवीद्राजा श्वो यात्रेति स मन्त्रिणः ॥ १७ ॥
मन्त्रिणस्तु नरेन्द्रस्य रात्रौ परमसत्कृताः ।
ऊषुः प्रमुदिताः सर्वे गुणैः सर्वैः समन्विताः ॥ १८ ॥

इति बालकाण्डे जनकदूतवाक्यं नाम अष्टषष्टितमः सर्गः ॥ ६८ ॥

ततो रात्र्यां व्यतीतायां सोपाध्यायः सबान्धवः ।
राजा दशरथो हृष्टः सुमन्त्रमिदमब्रवीत् ॥ १ ॥
अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम् ।
व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः ॥ २ ॥
चतुरङ्गबलं चापि शीघ्रं निर्यातु सर्वशः ।
ममाज्ञासमकालं च यानयुग्यमनुत्तमम् ॥ ३ ॥
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ।
मार्कण्डेयश्च दीर्घायुर्ऋषिः कात्यायनस्तथा ॥ ४ ॥
एते द्विजाः प्रयान्त्वग्रे स्यन्दनं योजयस्व मे ।
यथा कालात्ययो न स्याद्दूता हि त्वरयन्ति माम् ॥ ५ ॥
वचनाच्च नरेन्द्रस्य सेना सा चतुरङ्गिणी ।
राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वगात् ॥ ६ ॥
गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान् ।
राजा च जनकः श्रीमाञ्छ्रुत्वा पूजामकल्पयत् ॥ ७ ॥
ततो राजा समासाद्य वृद्धं दशरथं नृपम् ।
उवाच वचनं श्रेष्ठो नरश्रेष्ठं मुदान्वितम् ॥ ८ ॥
स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ।
पुत्रयोरुभयोः प्रीतिमाप्स्यसे वीर्यनिर्जिताम् ॥ ९ ॥
दिष्ट्या प्राप्तो महातेजा वसिष्ठो भगवानृषिः ।
सह सर्वैर्द्विजश्रेष्ठैर्देवैरिव शतक्रतुः ॥ १० ॥
दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलम् ।
राघवैः सह संबन्धाद्वीर्यश्रेष्ठैर्महाबलैः ॥ ११ ॥
श्वः प्रभाते नरेन्द्र त्वं निर्वर्तयितुमर्हसि ।
यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसंमतम् ॥ १२ ॥
तस्य तद्वचनं श्रुत्वा ऋषिमध्ये नराधिपः ।
वाक्यं वाक्यविदां श्रेष्ठः प्रत्युवाच महीपतिम् ॥ १३ ॥
प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा ।
यथा वक्ष्यसि धर्मज्ञ तत्करिष्यामहे वयम् ॥ १४ ॥

तद्धर्मिष्ठं यशस्यं च वचनं सत्यवादिनः ।
श्रुत्वा विदेहाधिपतिः परं विस्मयमागतः ॥ १५ ॥
ततः सर्वे मुनिगणाः परस्परसमागमे ।
हर्षेण महता युक्तास्तां रात्रिमवसन्सुखम् ॥ १६ ॥
अथ रामो महातेजा लक्ष्मणेन समं ययौ ।
कौशिकं च पुरस्कृत्य पितुः पादावुपास्पृशत् ॥ १७ ॥
राजा च राघवौ पुत्रौ निशाम्य परिहर्षितः ।
उवास परमप्रीतो जनकेनाभिपूजितः ॥ १८ ॥
जनकोपि महातेजाः क्रियां धर्मेण तत्त्ववित् ।
यज्ञस्य च सुताभ्यां च कृत्वा रात्रिमुवास ह ॥ १९ ॥

इति बालकाण्डे जनकदशरथसंवादो नाम एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

ततः प्रभाते जनकः कृतकर्मा महर्षिभिः ।
उवाच वाक्यं वाक्यज्ञः शतानन्दं पुरोहितम् ॥ १ ॥
भ्राता मम महातेजा यवीयानतिधार्मिकः ।
कुशध्वज इति ख्यातः पुरीमध्यावसच्छुभाम् ॥ २ ॥
वार्याफलकपर्यन्तां पिबन्निक्षुमतीं नदीम् ।
साकाश्यां पुण्यसंकाशां विमानमिव पुष्पकम् ॥ ३ ॥
तमहं द्रष्टुमिच्छामि यज्ञगोप्ता स मे मतः ।
प्रीतिं सोपि महातेजा इमां भोक्ता मया सह ॥ ४ ॥
एवमुक्ते तु वचने शतानन्दस्य संनिधौ ।
आगताः केचिदव्यग्रा जनकस्तान्समादिशत् ॥ ५ ॥
शासनात्तु नरेन्द्रस्य प्रययुः शीघ्रवाजिनः ।
समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा ॥ ६ ॥
साकाश्यां ते समागम्य ददृशुश्च कुशध्वजम् ।
न्यवेदयन्यथावृत्तं जनकस्य च चिन्तितम् ॥ ७ ॥

तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठैर्महाजवैः ।
आज्ञया हि नरेन्द्रस्य आजगाम कुशध्वजः ॥ ८ ॥
सोऽभिवाद्य शतानन्दं जनकं चातिधार्मिकम् ।
राजार्हं परमं दिव्यमासनमध्यरोहत ॥ ९ ॥
उपविष्टावुभौ तौ तु भ्रातरावमिततेजसौ ।
प्रेषयामासतुर्वीरौ मन्त्रिश्रेष्ठं सुदामनम् ॥ १० ॥
गच्छ मन्त्रिपते शीघ्रमिक्ष्वाकुममितप्रभम् ।
आत्मजैः सह दुर्धर्षमानयस्व समन्त्रिणम् ॥ ११ ॥
औपकार्यं स गत्वा तु रघूणां कुलवर्धनम् ।
ददर्श शिरसा चैनमभिवाद्येदमब्रवीत् ॥ १२ ॥
अयोध्याधिपते वीर वैदेहो मिथिलाधिपः ।
स त्वां द्रष्टुं व्यवसितः सोपाध्यायपुरोहितम् ॥ १३ ॥
मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षिगणस्तदा ।
सबन्धुरगमत्तत्र जनको यत्र वर्तते ॥ १४ ॥
राजा च मन्त्रिसहितः सोपाध्यायः सबान्धवः ।
वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ॥ १५ ॥
विदितं ते महाराज इक्ष्वाकुकुलदैवतम् ।
वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः ॥ १६ ॥
विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः ।
एष वक्ष्यति धर्मात्मा यथावन्मे यथाक्रमम् ॥ १७ ॥
तूष्णींभूते दशरथे वसिष्ठो भगवानृषिः ।
उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोधसम् ॥ १८ ॥
अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥ १९ ॥
विवस्वान्कश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः ।
मनुः प्रजापतिः पूर्वमिक्ष्वाकुश्च मनोः सुतः ॥ २० ॥
तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ।
इक्ष्वाकोस्तु सुतः श्रीमान्कुक्षिरित्येव विश्रुतः ॥ २१ ॥

कुक्षेरथात्मजः श्रीमान्विकुक्षिरुदपद्यत।
विकुक्षेस्तु महातेजाः बाणः पुत्रो व्यजायत॥ २२॥
बाणस्य तु महातेजा अनरण्यः प्रतापवान्।
अनरण्यात्पृथुर्जज्ञे त्रिशङ्कुस्तु पृथोरपि॥ २३॥
त्रिशङ्कोरभवत्पुत्रो धुन्धुमारो महायशाः।
धुन्धुमारान्महातेजा युवनाश्वो महारथः॥ २४॥
युवनाश्वसुतश्चैव मान्धाता पृथिवीपतिः।
मान्धातुस्तु सुतः श्रीमान्सुसंधिरुदपद्यत॥ २५॥
सुसंधेरपि पुत्रौ द्वौ ध्रुवसंधिः प्रसेनजित्।
यशस्वी ध्रुवसंधेस्तु भरतो नाम नामतः॥ २६॥
भरतात्तु महातेजा असितः समजायत।
यस्यैते प्रतिराजान उदपद्यन्त शत्रवः॥ २७॥
हैहयास्तालजङ्घाश्च शूराश्च शशिबिन्दवः।
तांश्च स प्रतियुध्यन्वै युद्धे राजा प्रवासितः॥ २८॥
हिमवन्तमुपागम्य भार्याभ्यां सहितस्तदा।
असितोऽल्पबलो राजा कालधर्ममुपेयिवान्॥ २९॥
द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतम्।
एका गर्भविनाशार्थं सपत्न्यै सा गरं ददौ॥ ३०॥
ततः शैलवरे रम्ये बभूवातिरतो मुनिः।
भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः॥ ३१॥
तत्र चैका महाभाग भार्गवं देववर्चसम्।
ववन्दे पद्मपत्राक्षी काङ्क्षन्ती सुतमुत्तमम्॥ ३२॥
तमृषिं साभ्युपागम्य कालिन्दी चाभ्यवादयत्।
स तामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि॥ ३३॥
तव कुक्षौ महाभागे अचिरात्सुजनिष्यति।
गरेण सहितः श्रीमान्मा शुचः कमलेक्षणे॥ ३४॥
च्यवनं तु नमस्कृत्य राजपुत्री पतिव्रता।
पतिना रहिता तस्मात्पुत्रं देवी व्यजायत॥ ३५॥

सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ।
सह तेन गरेणैव जातः स सगरोऽभवत् ॥ ३६ ॥
सगरस्यासमञ्जस्तु असमञ्जादथांशुमान् ।
दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः ॥ ३७ ॥
भगीरथात्ककुत्स्थश्च ककुत्स्थाच्च रघुस्तथा ।
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ॥ ३८ ॥
कल्माषपादोऽप्यभवत्तस्माज्जातस्तु शङ्खणः ।
सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् ॥ ३९ ॥
शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः ।
मरोः प्रशुश्रुकस्त्वासीदम्बरीषः प्रशुश्रुकात् ॥ ४० ॥
अम्बरीषस्य पुत्रोऽभून्नहुषः पृथिवीपतिः ।
नहुषस्य ययातिस्तु नाभागस्तु ययातिजः ॥ ४१ ॥
नाभागस्य बभूवाज अजाद्दशरथोऽभवत् ।
अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ॥ ४२ ॥
आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ।
इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ॥ ४३ ॥
रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप ।
सदृशाभ्यां नरश्रेष्ठ सदृशे दातुमर्हसि ॥ ४४ ॥

इति बालकाण्डे कन्यावरणं नाम सप्ततितमः सर्गः ॥ ७० ॥

---

एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः ।
श्रोतुमर्हसि भद्रं ते कुलं नः परिकीर्तितम् ॥ १ ॥
प्रदाने हि मुनिश्रेष्ठ कुलं निरवशेषतः ।
वक्तव्यं कुलजातेन तन्निबोध महामुने ॥ २ ॥
राजाभूत्त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा ।
निमिः परमधर्मात्मा सर्वसत्यवतां वरः ॥ ३ ॥
तस्य पुत्रो मिथिर्नाम जनको मिथिपुत्रकः ।
प्रथमो जनको राजा जनकादप्युदावसुः ॥ ४ ॥

उदावसोस्तु धर्मात्मा जातो वै नन्दिवर्धनः ।
नन्दिवर्धसुतः शूरः सुकेतुर्नाम नामतः ॥ ५ ॥
सुकेतोरपि धर्मात्मा देवरातो महाबलः ।
देवरातस्य राजर्षेर्बृहद्रथ इति स्मृतः ॥ ६ ॥
बृहद्रथस्य शूरोभून्महावीरः प्रतापवान् ।
महावीरस्य धृतिमान्सुधृतिः सत्यविक्रमः ॥ ७ ॥
सुधृतेरपि धर्मात्मा धृष्टकेतुरभूत्सुतः ।
धृष्टकेतोश्च राजर्षेर्हर्यश्व इति विश्रुतः ॥ ८ ॥
हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतीन्धकः ।
प्रतीन्धकस्य धर्मात्मा राजा कीर्तिरथः सुतः ॥ ९ ॥
पुत्रः कीर्तिरथस्यापि देवमीढ इति स्मृतः ।
देवमीढस्य विबुधो विबुधस्य महान्ध्रकः ॥ १० ॥
महान्ध्रकसुतो राजा कीर्तिरातो महाबलः ।
कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११ ॥
महारोम्णस्तु धर्मात्मा स्वर्णरोमेति विश्रुतः ।
स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत ॥ १२ ॥
तस्य पुत्रद्वयं जज्ञे धर्मज्ञस्य महात्मनः ।
ज्येष्ठोहमनुजो भ्राता मम वीरः कुशध्वजः ॥ १३ ॥
मां तु ज्येष्ठं पिता राज्ये सोभिषिच्य नराधिपः ।
कुशध्वजं समावेश्य भारं मयि वनं गतः ॥ १४ ॥
वृद्धे पितरि स्वर्याते धर्मेण धुरमावहम् ।
भ्रातरं देवसंकाशं स्नेहात्पश्यन्कुशध्वजम् ॥ १५ ॥
कस्यचित्त्वथ कालस्य सांकाश्यादागतः पुरात् ।
सुधन्वा वीर्यवान्राजा मिथिलामवरोधकः ॥ १६ ॥
स च मे प्रेषयामास शैवं धनुरनुत्तमम् ।
सीता च कन्या पद्माक्षी मह्यं वै दीयतामिति ॥ १७ ॥
तस्याप्रदानाद्ब्रह्मर्षे युद्धमासीन्मया सह ।
स हतोभिमुखो राजा सुधन्वा तु मया रणे ॥ १८ ॥

निहत्य तं मुनिश्रेष्ठ सुधन्वानं नराधिपं ।
सांकाश्ये भ्रातरं शूरमभ्यषिञ्च कुशध्वजम् ॥ १९ ॥
कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने ।
ददामि परमप्रीतो वध्वौ ते मुनिपुंगव ॥ २० ॥
सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय वै ।
वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ॥ २१ ॥
द्वितीयामूर्मिलां चैव त्रिर्वदामि न संशयः ।
ददामि परमप्रीतो वध्वौ ते मुनिपुंगव ॥ २२ ॥
रामलक्ष्मणयो राजन्गोदानं कारयस्व ह ।
पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु ॥ २३ ॥
मघा ह्यद्य महाबाहो तृतीये दिवसे प्रभो ।
फाल्गुन्यामुत्तरे राजंस्तस्मिन्वैवाहिकं कुरु ॥ २४ ॥

इति बालकाण्डे जनककुलप्रख्यानं नाम एकसप्ततितमः सर्गः ॥७१॥

---

उक्तवाक्ये तु जनके विश्वामित्रो महामुनिः ।
उवाच वचनं धीमान्वसिष्ठसहितस्तदा ॥ १ ॥
अचिन्त्यान्यप्रमेयाणि कुलानि रघुनन्दन ।
इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥ २ ॥
सदृशो धर्मसंबन्धः सदृशो रूपसंपदा ।
सीताया ऊर्मिलायाश्च रामलक्ष्मणयोस्तथा ॥ ३ ॥
वक्तव्यं च नरश्रेष्ठ श्रूयतां वचनं मम ।
भ्राता यवीयान्धर्मज्ञ एष राजा कुशध्वजः ॥ ४ ॥
अस्य धर्मात्मनो राजन्रूपेणाप्रतिमं भुवि ।
सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ॥ ५ ॥
भरतस्य कुमारस्य शत्रुघ्नस्य [redacted] धीमतः ।
वरये ते सुते राजंस्तयोरर्थे महात्मनोः ॥ ६ ॥
पुत्रा दशरथस्येमे रूपयौवनशालिनः ।
लोकपालसमाः सर्वे देवतुल्यपराक्रमाः ॥ ७ ॥

उभयोरपि राजेन्द्र संबन्धेनानुबध्यताम् ।
इक्ष्वाकुकुलमव्यग्रं भवतः पुण्यकर्मणः ॥ ८ ॥
विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा ।
जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुंगवौ ॥ ९ ॥
कुलं धन्यमिदं मन्ये येषां नो मुनिपुंगवौ ।
सदृशं कुलसंबन्धं यदाज्ञापयथः स्वयम् ॥ १० ॥
एवं भवतु भद्रं वः कुशध्वजसुते इमे ।
पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥ ११ ॥
एकाह्ना राजपुत्रीणां चतसृणां महामुने ।
पाणीन् गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥ १२ ॥
उत्तरे दिवसे ब्रह्मन्फाल्गुनीभ्यां मनीषिणः ।
वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ॥ १३ ॥
एवमुक्त्वा वचः सौम्यं प्रत्युत्थाय कृताञ्जलिः ।
उभौ मुनिवरौ राजा जनको वाक्यमब्रवीत् ॥ १४ ॥
परो धर्मः कृतो मह्यं शिष्योऽस्मि भवतोः सदा ।
इमान्यासनमुख्यानि आस्येतां मुनिपुंगवौ ॥ १५ ॥
यथा दशरथस्येयं तथायोध्या पुरी मम ।
प्रभुत्वे नास्ति संदेहो यथार्हं कर्तुमर्हथ ॥ १६ ॥
तथा ब्रुवति वैदेहे जनके रघुनन्दनः ।
राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥ १७ ॥
युवामसंख्येयगुणौ भ्रातरौ मिथिलेश्वरौ ।
ऋषयो राजसंघाश्च भवद्भ्यामभिपूजिताः ॥ १८ ॥
स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामि स्वमालयम् ।
श्राद्धकर्माणि विधिवद्विधास्य इति चाब्रवीत् ॥ १९ ॥
तमापृष्ट्वा नरपतिं राजा दशरथस्तदा ।
मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥ २० ॥
स गत्वा निलयं राजा श्राद्धं कृत्वा विधानतः ।
प्रभाते काल्यमुत्थाय चक्रे गोदानमुत्तमम् ॥ २१ ॥

गवां शतसहस्रं हि ब्राह्मणेभ्यो नराधिपः ।
एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२ ॥
सुवर्णशृङ्गसंपन्नाः सवत्साः कांस्यदोहनाः ।
गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३ ॥
स सुतैः कृतगोदानैर्वृतस्तु नृपतिस्तदा ।
लोकपालैरिवाभाति वृतः सौम्यः प्रजापतिः ॥ २४ ॥

इति बालकाण्डे गोदानं नाम द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम् ।
तस्मिंस्तु दिवसे वीरो युधाजित्समुपेयिवान् ॥ १ ॥
पुत्रः केकयराजस्य साक्षाद्भरतमातुलः ।
दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत् ॥ २ ॥
केकयाधिपती राजन्स्नेहात्कुशलमब्रवीत् ।
येषां कुशलकामोसि तेषां संप्रत्यनामयम् ॥ ३ ॥
स्वस्रीयं मम राजेन्द्र द्रष्टुकामो महीपतिः ।
तदर्थमुपयातोहमयोध्यां रघुनन्दन ॥ ४ ॥
श्रुत्वा त्वहमयोध्यायामिहस्थं त्वां सबान्धवम् ।
त्वरयाभ्युपयातोहं द्रष्टुकामः स्वसुः सुतम् ॥ ५ ॥
अथ राजा दशरथः प्रियातिथिमुपस्थितम् ।
दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत् ॥ ६ ॥
ततस्तामुषितो रात्रिं सह पुत्रैर्महीपतिः ।
पुरस्कृत्य वसिष्ठादीन्मुनीन्यज्ञमुपाययौ ॥ ७ ॥
युक्ते मुहूर्ते विजये सर्वाभरणभूषितैः ।
भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः ।
पितुः समीपमाश्रित्य तस्थौ भ्रातृभिरावृतः ॥ ८ ॥
वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् ।
राजा दशरथो राजन्कृतकौतुकमङ्गलैः ।
पुत्रैर्नरवरश्रेष्ठ दातारमभिकाङ्क्षते ॥ ९ ॥

दातृप्रतिग्रहीतृभ्यां सर्वार्थाः प्रभवन्ति हि ।
स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम् ॥ १० ॥
इत्युक्तः परमोदारो वसिष्ठेन महात्मना ।
प्रत्युवाच महातेजा वाक्यं परमधर्मवित् ॥ ११ ॥
कः स्थितः प्रतिहारो मे कस्याज्ञा संप्रतीक्ष्यते ।
स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव ॥ १२ ॥
यज्ञभूमिमिमां प्राप्ताः कृतकौतुकमङ्गलाः ।
मम कन्याश्चतस्रो हि दीप्ता वह्नेरिवार्चिषः ॥ १३ ॥
सद्योऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः ।
अविघ्नं क्रियतां सर्वं किमर्थं हि विलम्ब्यते ॥ १४ ॥
तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ।
प्रवेशयामास सुतान्सर्वानृषिगणानपि ॥ १५ ॥
ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ।
कारयस्व ऋषे सर्वां क्रियां वैवाहिकीं प्रभो ॥ १६ ॥
तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ।
विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ॥ १७ ॥
प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः ।
अलंचकार तां वेदिं गन्धपुष्पैः समन्ततः ॥ १८ ॥
सुवर्णपालिकाभिश्च च्छिद्रकुम्भैश्च साङ्कुरैः ।
अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः ॥ १९ ॥
शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्यादिपूजितैः ।
लाजपूर्णैस्तथा पात्रैरक्षतैरपि संस्कृतैः ॥ २० ॥
दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम् ।
जुहावाग्नौ महातेजा वसिष्ठो मुनिसत्तमः ॥ २१ ॥
ततः सीतां समानीय सर्वाभरणभूषिताम् ।
समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ॥ २२ ॥
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ।
इयं सीता मम सुता सहधर्मचरी तव ॥ २३ ॥

प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ।
पतिव्रता महाभागा छायेवानुगता सदा ॥ २४ ॥
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ।
साधु साध्विति देवानामृषीणां वदतां तदा ॥ २५ ॥
एवं दत्त्वा सुतां सीतां मन्त्रोदकपुरस्कृताम् ।
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ॥ २६ ॥
लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया ।
प्रतीच्छ पाणिं गृह्णीष्व मा भूत्कालस्य पर्ययः ॥ २७ ॥
तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ।
गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन ॥ २८ ॥
शत्रुघ्नं चापि धर्मात्मा अब्रवीन्मिथिलेश्वरः ।
श्रुतकीर्तेर्महाबाहो पाणिं गृह्णीष्व पाणिना ॥ २९ ॥
सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ।
पत्नीभिः सन्तु काकुत्स्था मा भूत्कालस्य पर्ययः ॥ ३० ॥
जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ।
चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ॥ ३१ ॥
अग्निं प्रदक्षिणं चक्रुर्वेदिं राजानमेव च ।
ऋषींश्चापि महात्मानः सहभार्या रघूद्वहाः ॥ ३२ ॥
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ।
दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिःस्वनैः ॥ ३३ ॥
ननृतुश्चाप्सरःसंघा गन्धर्वाश्च जगुः कलम् ।
विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ॥ ३४ ॥
ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते ।
त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ॥ ३५ ॥
अथोपकार्यां जग्मुस्ते सभार्या रघुनन्दनाः ।
राजाप्यनुययौ पश्यन्सर्षिसंघः सबान्धवः ॥ ३६ ॥

इति बालकाण्डे दशरथपुत्रविवाहो नाम त्रिसप्ततितमः सर्गः ॥७३॥

अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ।
आपृच्छ्य तौ नरव्याघ्रौ जगामोत्तरपर्वतम् ॥ १ ॥
विश्वामित्रे गते तस्मिन्वैदेहं मिथिलाधिपम् ।
आपृच्छ्य प्रययौ चापि राजा दशरथः पुरीम् ॥ २ ॥
अथ राजा विदेहानां ददौ कन्याधनं बहु ।
कम्बलादीनि वस्त्राणि क्षौमपट्टाम्बराणि च ॥ ३ ॥
हस्त्यश्वरथपादातं दिव्यरूपं स्वलंकृतम् ।
ददौ कन्यापिता तासां दासीदासमनुत्तमम् ॥ ४ ॥
हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च ।
ददौ राजा सुसंहृष्टः कन्याधनमभीप्सितम् ॥ ५ ॥
दत्त्वा बहुविधं राजा समनुज्ञाप्य पार्थिवम् ।
प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः ॥ ६ ॥
राजाप्ययोध्याधिपतिः सह पुत्रैर्महात्मभिः ।
ऋषीन्सर्वान्पुरस्कृत्य जगाम सबलानुगः ॥ ७ ॥
गच्छन्तं तं नरव्याघ्रं सर्षिसंघं सराघवम् ।
घोराः स्म पक्षिणो वाचो व्याहरन्ति समन्ततः ॥ ८ ॥
भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम् ।
तान्दृष्ट्वा राजशार्दूलो वसिष्ठं पर्यपृच्छत ॥ ९ ॥
असौम्याः पक्षिणो घोरा मृगाश्चापि प्रदक्षिणाः ।
किमिदं हृदयोत्कम्पि मनो मम विषीदति ॥ १० ॥
राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः ।
उवाच मधुरां वाणीं श्रूयतामस्य यत्फलम् ॥ ११ ॥
उपस्थितं भयं घोरं दिव्यपक्षिमुखाच्च्युतम् ।
मृगाः प्रशमयन्त्येते संतापस्त्यज्यतामयम् ॥ १२ ॥
तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह ।
कम्पयन्मेदिनीं सर्वां पातयंश्च महाद्रुमान् ॥ १३ ॥
तमसा संवृतः सूर्यः सर्वे नावेदिषुर्दिशः ।
भस्मना चावृतं सर्वं संमूढमिव तद्बलम् ॥ १४ ॥

वसिष्ठ ऋषयश्चान्ये राजा च ससुतस्तदा ।
ससंज्ञा इव तत्रासन्सर्वमन्यद्विचेतनम् ॥ १५ ॥
तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः ।
ददर्श भीमसंकाशं जटामण्डलधारिणम् ॥ १६ ॥
भार्गवं जामदग्नेयं राजराजविमर्दनम् ।
कैलासमिव दुर्धर्षं कालाग्निमिव दुःसहम् ॥ १७ ॥
स्कन्धे चासज्य परशुं धनुर्विद्युद्गणोपमम् ।
प्रगृह्य शस्त्रमुग्रं च त्रिपुरघ्नं यथा शिवम् ॥ १८ ॥
तं दृष्ट्वा भीमसंकाशं ज्वलन्तमिव पावकम् ।
वसिष्ठप्रमुखा विप्रा जपहोमपरायणाः ॥ १९ ॥
संगता मुनयः सर्वे संजजल्पुरथो मिथः ।
कच्चित्पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ॥ २० ॥
पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः ।
क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥ २१ ॥
एवमुक्त्वार्घ्यमादाय भार्गवं भीमदर्शनम् ।
ऋषयो राम रामेति मधुरां वाचमब्रुवन् ॥ २२ ॥
प्रतिगृह्य तु तां पूजामप्रत्युक्त्वा च तानृषीन् ।
रामं दाशरथिं रामो जामदग्न्योभ्यभाषत ॥ २३ ॥

इति बालकाण्डे जामदग्न्यसमागमो नाम चतुःसप्ततितमः सर्गः ७४

---

राम दाशरथे वीर वीर्यं ते श्रूयतेद्भुतम् ।
धनुषो भेदनं चैव निखिलेन मया श्रुतम् ॥ १ ॥
तदद्भुतमचिन्त्यं च भेदनं धनुषस्त्वया ।
तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्यापरं शुभम् ॥ २ ॥
तदिदं घोरसंकाशं जामदग्न्यं महद्धनुः ।
पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ ३ ॥
तदहं ते बलं दृष्ट्वा धनुषोप्यस्य पूरणे ।
द्वन्द्वयुद्धं प्रदास्यामि वीर श्लाघ्यमिदं तव ॥ ४ ॥

तस्य तद्वचनं श्रुत्वा राजा दशरथस्तदा ।
विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ५ ॥
क्षत्ररोषात्प्रशान्तस्त्वं ब्राह्मणश्च महातपाः ।
बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ६ ॥
भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम् ।
सहस्राक्षे प्रतिज्ञाय शस्त्रं प्रक्षिप्तवानसि ॥ ७ ॥
स त्वं धर्मपरो भूत्वा कश्यपाय वसुंधराम् ।
दत्त्वा वनमुपागम्य महेन्द्रकृतकेतनः ॥ ८ ॥
मम सर्वविनाशाय संप्राप्तस्त्वं महामुने ।
न ह्येकस्मिन्हते रामे सर्वे जीवामहे वयम् ॥ ९ ॥
ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान् ।
अनादृत्य तु तद्वाक्यं राममेवाभ्यभाषत ॥ १० ॥
इमे द्वे धनुषी राम दिव्ये लोकाभिपूजिते ।
दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ॥ ११ ॥
अनुसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे ।
त्रिपुरघ्नं नरश्रेष्ठ भग्नं काकुत्स्थ यत्त्वया ॥ १२ ॥
इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः ।
तदिदं वैष्णवं राम धनुः परपुरंजयम् ॥ १३ ॥
तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम् ।
शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया ॥ १४ ॥
अभिप्रायं तु विज्ञाय देवतानां पितामहः ।
विरोधं जनयामास तयोः सत्यवतां वरः ॥ १५ ॥
विरोधे तु महद्युद्धमभवद्रोमहर्षणम् ।
शितिकण्ठस्य विष्णोश्च परस्परजयैषिणोः ॥ १६ ॥
तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम् ।
हुंकारेण महादेवः स्तम्भितोथ त्रिलोचनः ॥ १७ ॥
देवैस्तदा समागम्य सर्षिसंघैः सचारणैः ।
याचितौ प्रशमं तत्र जग्मतुस्तौ सुरोत्तमौ ॥ १८ ॥

जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ।
अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तथा ॥ १९ ॥
धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः ।
देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ॥ २० ॥
इदं च वैष्णवं राम धनुः परपुरंजयम् ।
ऋचीके भार्गवे प्रादाद्विष्णुः स न्यासमुत्तमम् ॥ २१ ॥
ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः ।
पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ॥ २२ ॥
न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते ।
अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः ॥ २३ ॥
वधमप्रतिरूपं तु पितुः श्रुत्वा सुदारुणम् ।
क्षत्रमुत्सादयं रोषाज्जातं जातमनेकशः ॥ २४ ॥
पृथिवीं चाखिलां प्राप्य कश्यपाय महात्मने ।
यज्ञस्यान्ते तदा राम दक्षिणां पुण्यकर्मणे ॥ २५ ॥
दत्त्वा महेन्द्रनिलयस्तपोबलसमन्वितः ।
स्थितोस्मि तस्मिंस्तप्यन्वै सुसुखं सुरसेविते ॥ २६ ॥
श्रुत्वा तु धनुषो भेदं विस्मिताना नभस्तले ।
प्रापतां देवसंघानां ततोहं द्रुतमागतः ॥ २७ ॥
तदिदं वैष्णवं राम पितृपैतामहं महत् ।
क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥ २८ ॥
योजयस्व धनुःश्रेष्ठे शरं परपुरंजयम् ।
यदि शक्नोषि काकुत्स्थ द्वन्द्वं दास्यामि ते तदा ॥ २९ ॥

इति बालकाण्डे जामदग्न्यवाक्यं नाम पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

श्रुत्वा तु जामदग्न्यस्य वाक्यं दाशरथिस्तदा ।
गौरवयन्त्रितकथः पितू राममथाब्रवीत् ॥ १ ॥
श्रुतवानस्मि यत्कर्म कृतवानसि भार्गव ।
अनुरुन्ध्यामहे ब्रह्मन्पितुरानृण्यमास्थितः ॥ २ ॥

वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव ।
अवजानासि मे तेजः पश्य मेद्य पराक्रमम् ॥ ३ ॥
इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य वरायुधम् ।
शरं च प्रतिसंगृह्य हस्ताल्लघुपराक्रमः ॥ ४ ॥
आरोप्य स धनू रामः शरं सज्यं चकार ह ।
जामदग्न्यं ततो रामं रामः क्रुद्धोब्रवीदिदम् ॥ ५ ॥
ब्राह्मणोसीति पूज्यो मे विश्वामित्रकृतेन च ।
शक्तोपि ते न मुञ्चेयं त्वहं प्राणहरं शरम् ॥ ६ ॥
इमां वा त्वद्गतिं राम तपोबलसमर्जिताम् ।
लोकानप्रतिमान्वापि हनिष्यामीति मे मतिः ॥ ७ ॥
न ह्ययं वैष्णवो दिव्यः शरः परपुरंजयः ।
मोघः पतति वीर्येण बलदर्पविनाशनः ॥ ८ ॥
वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः ।
पितामहं पुरस्कृत्य समेतास्तत्र सर्वशः ॥ ९ ॥
गन्धर्वाप्सरसश्चैव सिद्धचारणकिंनराः ।
यक्षराक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १० ॥
जडीकृते तदा लोके रामे वरधनुर्धरे ।
निर्वीर्यो जामदग्न्योसौ रामो राममुदैक्षत ॥ ११ ॥
तेजोभिहतवीर्यत्वाज्जामदग्न्यो जडीकृतः ।
रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥ १२ ॥
कश्यपाय मया दत्ता यदा पूर्वं वसुंधरा ।
विषये मे न वस्तव्यमिति मां कश्यपोब्रवीत् ॥ १३ ॥
सोहं गुरुवचःकुर्वन्पृथिव्यां न वसे निशाम् ।
मिथ्याप्रतिज्ञः काकुत्स्थ मा भूवमिति निश्चितम् ॥ १४ ॥
तदिमां मद्गतिं वीर हन्तुं नार्हसि राघव ।
मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ १५ ॥
लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया ।
जहि ताञ्छरमोक्षेण मा भूत्कालस्य पर्ययः ॥ १६ ॥

अक्षयं मधुहन्तारं जानामि त्वां महेश्वरम् ।
धनुषोऽस्य परामर्शात्स्वस्ति तेऽस्तु परंतप ॥ १७ ॥
एते सुरगणाः सर्वे निरीक्षन्ते समागताः ।
त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ १८ ॥
न चेयं मम काकुत्स्थ व्रीडा भवितुमर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ १९ ॥
शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत ।
शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ २० ॥
तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् ।
रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमम् ॥ २१ ॥
स हतान्दृश्य रामेण स्वाँल्लोकांस्तपसार्जितान् ।
जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥ २२ ॥
ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा ।
सुराः सर्षिगणा रामं प्रशशंसुरुदायुधम् ॥ २३ ॥
रामं दाशरथिं रामो जामदग्न्यः प्रशस्य ह ।
ततः प्रदक्षिणं कृत्वा जगामात्मगतिं प्रभुः ॥ २४ ॥

**इति बालकाण्डे जामदग्न्यलोकनिरोधो नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥**

---

गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः ।
वरुणायाप्रमेयाय ददौ हस्ते ससायकम् ॥ १ ॥
अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् ।
पितरं विह्वलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २ ॥
जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी ।
अयोध्याभिमुखी सेना त्वया नाथेन पालिता ॥ ३ ॥
रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् ।
बाहुभ्यां संपरिष्वज्य मूर्ध्न्युपाघ्राय राघवम् ॥ ४ ॥

गतो राम इति श्रुत्वा हृष्ट प्रमुदितो नृप ।
पुनर्जातं तदा मेने पुत्रमात्मानमेव च ॥ ५ ॥
चोदयित्वा पुन सेना जगाम स्वपुरीं प्रति ।
समुच्छ्रितध्वजवतीं तूर्योद्घुष्टनिनादिताम् ॥ ६ ॥
सिक्तराजपथा रम्या प्रकीर्णकुसुमोत्कराम् ।
राजप्रवेशसुमुखै पौरैर्मङ्गलपाणिभि ।
सपूर्णां प्राविशद्राजा जनौघै समलङ्कृताम् ॥ ७ ॥
पौरै प्रत्युद्गतो दूर द्विजैश्च पुरवासिभि ।
पुत्रैरनुगत श्रीमाञ्छ्रीमद्भिश्च महायशा ।
प्रविवेश गृह राजा हिमवत्सदृश प्रियम् ॥ ८ ॥
कौशल्या च सुमित्रा च कैकेयी च सुमध्यमा ।
वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषित ॥ ९ ॥
तत सीता महाभागामूर्मिला च यशस्विनीम् ।
कुशध्वजसुते चोभे जगृहुर्नृपपत्नय ॥ १० ॥
मङ्गलालापनैर्होमै शोभिता क्षौमवासस ।
देवतायतनान्याशु सर्वास्ता प्रत्यपूजयन् ॥ ११ ॥
अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा ।
रेमिरे मुदिता काले भर्तृभि सहिता रह ॥ १२ ॥
कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि ।
स्व स्व गृहमथासाद्य कुबेरभवनोपमम् ॥ १३ ॥
कृतदारा कृतास्त्राश्च सधना ससुहृज्जना ।
शुश्रूषमाणा पितर वर्तयन्ति नरर्षभा ॥ १४ ॥
कस्यचित्त्वथ कालस्य राजा दशरथ सुतम् ।
भरत कैकयीपुत्र सभाहूयेदमब्रवीत् ॥ १५ ॥
अय केकयराजस्य पुत्रो वसति पुत्रक ।
त्वा नेतुमागतो वीरो युधाजिन्मातुलस्तव ॥ १६ ॥
श्रुत्वा दशरथस्यैतद्भरत कैकयीसुत ।
गमनायाभिचक्राम शत्रुघ्नसहितस्तदा ॥ १७ ॥

आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ।
मातॄश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ ॥ १८ ॥
युधाजित्प्राप्य भरतं सशत्रुघ्नं प्रहर्षितः ।
स्वपुरं प्राविशद्वीरः पिता तस्य तुतोष ह ॥ १९ ॥
गते तु भरते रामो लक्ष्मणश्च महाबलः ।
पितरं देवसंकाशं पूजयामासतुस्तदा ॥ २० ॥
पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः ।
चकार रामो धर्मात्मा प्रियाणि च हितानि च ॥ २१ ॥
मातृभ्यो मातृकार्याणि कृत्वा परमयन्त्रितः ।
गुरूणां गुरुकार्याणि काले कालेऽन्ववैक्षत ॥ २२ ॥
एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तथा ।
रामस्य शीलवृत्तेन सर्वे विषयवासिनः ॥ २३ ॥
रामश्च सीतया सार्धं विजहार बहूनृतून् ।
मनस्वी तद्गतमनास्तस्या हृदि समर्पितः ॥ २४ ॥
प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयो व्यवर्धत ॥ २५ ॥
तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते ।
अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा ॥ २६ ॥
तस्य भूयो विशेषेण मैथिली जनकात्मजा ।
देवताभिः समा रूपे सीता श्रीरिव रूपिणी ॥ २७ ॥

तया स राजर्षिसुतोऽभिकामया
समेयिवानुत्तमराजकन्यया ।
अतीव रामः शुशुभे मुदान्वितो
विभुः श्रिया विष्णुरिवामरेश्वरः ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये चतुर्विंशतिसाहस्र्यां संहितायां
बालकाण्डे भरतप्रस्थापनं नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥

॥ इति श्रीमद्बालकाण्डं समाप्तम् ॥

# NOTES.

P. 1.—"The Mss. differ greatly in this prelude, most of them opening with longer introductions in honour not only of the poet, but also of the chief characters of the poem These introductions, it is clear, are not from the same hand as the poem itself, even if we suppose that the poem is the work of one author. In some of them the language and the metre speak of a later origin, for example, the verse that comes third in the Calcutta edition is taken from the prologue of the play *Arghya-Rághava*. I have thought it best to keep only those which commend themselves by their neatness and simplicity, and seem to have passed into proverbs.' Schlegel.

P. 1. L. 3—मुनिसिंहस्य Grammar § 545.

P. 3. L. 1.—'This conversation is represented as having taken place in Râma's life-time, about sixteen years after his return from his wanderings and recovery of his ancestral throne.' Schlegel.

P. 3. L. 2.—मुनिपुंगव . Grammar § 545.

P. 3. L. 5.—चारित्रेण च को युक्तः. The student should carefully observe the different senses in which the various case endings are used in the simple style of the Râmâyana. These case-endings were, there is little doubt, originally separate words attached to the principal words as prepositions are in English, but put after instead of before the words to which they refer. In most cases too we can see that the earliest meaning of these case-endings had reference to place, and that it was only by a metaphor that they were used *of other relations. The third case-ending meant with*, as in this verse, before it meant *by* as it usually does So the English word by meant originally *alongside of*, a meaning which is still preserved in such phrases as '*by him there stood*,' and in the German form of the word. The English word with has gone through exactly the same metaphorical extension of its meaning when it is used in such a sentence as '*He struck the boy with a stick*.' Compare with this use of with P. 5. Ll. 12—13 where we find धार्यन् used first in its original and then in its derived sense.

P. 3. L. 15.—त्रिकालज्ञ . So Homer says of the bard Calchas that he knew—

"What was, what should be, what had been before" Another reading is त्रिलोकज्ञ .

P. 3. L. 20.—द्युतिमान्. The common word is श्रुतवान् for which this is probably a mistake. Bomb. Ed. has धृतिमान् here, which suits the context better. Carey and Marshman, and Gorresio have द्युतिमान्धृतिमान्वशी.

P. 4. L. 1.—गूढजत्रुः. गूढे मांसलत्वान्निमग्ने जत्रुणी वक्षांससन्धिगते अस्थिनी यस्य.—अरिंदमः. This is a compound of the same character as those mentioned in Grammar § 540.

P. 4. L. 2.—सुविक्रमः. विक्रम in its original meaning of '*step*' or '*stride.*'

P. 4. L. 3.—समः. नातिदीर्घो नातिह्रस्वः.

P. 4. L. 4.—विशालाक्षः. Grammar § 559.

P. 4. L. 8.—निविष्टः. '*Grounded.*'

P. 4. L. 14.—विष्णुना सदृशः. In the construction with सदृश the student may again trace the original sociative meaning of the termination of the third case. विष्णुना सदृशः can be translated '*like Vishnu*' because it means literally '*of the same appearance when placed alongside of Vishnu.*' *See previous note.—It is perhaps worth noticing that the writer of this* verse can hardly have had the account which follows of Râma's birth—according to which Râma is Vishnu—in his mind. There are other indications that the whole story of Vishṇu's incarnation is an interpolation inserted into an earlier poem.

P 4. LL. 17—22. Two verses of three lines each. Such verses are not uncommon throughout the book, though Schlegel in all such cases prefers to assume that a line is missing.

P. 4. L. 20—कैकयी. The other form कैकेयी below L. 26.

P. 4. L. 21.—दत्तवरा Similar incidents are common in all literatures. The boon given is sometimes taken advantage of at once, sometimes as here held in reserve. Compare the story of Herodias' daughter. 'But when Herod's birthday was kept, the daughter of Herodias danced before them, and pleased Herod. Whereupon he promised with an oath to give her whatsoever she should ask. And she, being before instructed of her mother, said, 'Give me here John Baptist's head in a charger.' And king was sorry: nevertheless for the oath's sake (सत्यवचनात्), and them which sat with him at meat, he *commanded it to be given her.* he sent, and beheaded John in the prison. And his head was ught in a charger, and given to the damsel and she brought it to her ther.' Matthew. Chap. XIV. vv. 6-10.

P. 5. L. 1.—प्राणसमा हिता. This is the reading of the Bomb. Ed, which explains हिता as a separate epithet of Sitâ=हितकारिणी. Schlegel as प्राणसमाहिता (*semper intima vitae socia*).

P. 5. L. 9.—वनेन वनं गत्वा. '*Traversing wood after wood.*' Literally '*wood with wood.*' See note on P. 3. L. 5.'

P. 5. L. 11.—सलक्ष्मणः. Grammar § 555 (*b*)

P. 5 L. 20.—आर्यभावपुरस्कृत· आर्यभावपुरस्कृत is a bahuvrihi compound in which पुरस्कृत has lost a great part of the meaning proper to it, so that the whole compound does not mean much more than—*being a man of noble nature.* Compare similar uses of पूर्वकम् P. 28. L. 6, पूर्व P. 34. L. 15. and पुरःसर P. 33. L. 8.

P. 5. L 23.—पादुके चास्य राज्याय दत्त्वा. The चास्य is to be construed with दत्त्वा and not with राज्याय as the Bomb. Ed. takes it. Homage was expressed by bending down before the feet of the sovereign (*cf.* राम-पादपसादक. L. 19), and so might in his absence be performed before his slippers as the next best thing. To this day when a guru goes on a journey he leaves his slippers behind him to supply his place. It is curious to compare with this ancient custom the practice observed at the Court of Hanover down to the beginning of this century of inviting the courtiers to bow before a portrait of the sovereign which was placed on the royal seat on occasions when the sovereign himself was unable to be present.

P. 6 L. 2.—Sandhi is broken in the middle of a line or not as may be convenient.

P. 6. L. 7.—कमलपत्राक्षम्. Grammar § 559.

P. 6. L 10.—नामतो रावणो नाम. Compare our pleonasms '*called by name*' and '*thou shalt call his name*'.—कामरूपी. '*Changing his form at will.*'

P. 7. L 2 —इत्या तमदक्ष्काशे·. Altered by the previous editors from Schlegel's त इत्था कार्धरस्तन्.

P. 7. L. 3.—कथयामास शबरीं श्रमणाम् '*Told him about the S'abara, female ascetic.*'—Compare the construction in P. 3. L. 18.

P. 7. L. 13.—वानरराजेन. Grammar § 552. 7.

P. 7. L. 20 —सपूर्णम्. *Full* (which is the same word as पूर्ण) is used in English in the same way —

"Full fathom five thy father lies."

*The Tempest. Act I. Sc. II.*

दपयोजनम्. Grammar § 548 (*b*).

P. 7. L. 21.—सम तालाम. There is an historical reason for the rule which requires the insertion of a स् (changed to ष्) between न् and च् as here. The स् is not an arbitrary addition for the sake of euphony, but a part of the old sign of the accusative case.

P. 8. L. 4.—दिदृक्षु. '*Hoping in this way to find.*

P. 8. L. 6.—लवणार्णवम् '*The salt sea.*' We may perhaps see in the standing epithet a name given by a race to whom *salt* water was a strange thing.

P. 8. L. 9.—अभिज्ञान and प्रत्यभिज्ञान. '*Token and Return-Token.*' Allusions to the custom of giving tokens to messengers by way of credentials are frequent in most early literatures. The custom, dating from before the invention of writing, was afterwards found convenient by those to whom writing was no easy task, and for that and other reasons has continued to our day. That in this case the tokens were things and not messages is clear from गृहीत्वा in the next line, and the language used in P. 15. L. 20. So that निवेदयित्वा must not be translated '*having told*' but '*having given.*' *Cf.* प्रत्यवेदयत् P. 10. L. 25.

P. 8. L. 13.—अस्त्रेणोन्मुच्य &c. *When he had freed himself from the weapon* (i. e. the net given by Brahmâ to Indrajit) *the hero remembered and respected the promise of Brahmâ* (that the net should never fail) *and submitted of his own accord to the torments inflicted on him by the Râkshasas.*' The construction of उन्मुच्य if the reading is right, is peculiar, though we might compare सर्वपापै प्रमुच्यते P. 6. L. 27, and वियुक्ता पतिना P. 11. L. 9, where, as here, the instrumental might be explained as referring to the contact that must precede the separation. But there is a great diversity of readings in this verse, and अस्त्रात् is probably the right reading. The Bomb. Ed. has—

अस्त्रेणोन्मुक्तमात्मान ज्ञात्वा पैतामहाद्वरात् ।
मर्षयन्राक्षसान्वीरो यन्त्रिणस्तान्यदृच्छया ॥

Carey and Marshman—

अस्त्रादुन्मुच्य चात्मान ज्ञात्वा पैतामहान्वरान् ।
ममर्ष राक्षसान्वीरो यन्त्रणा च यदृच्छया ॥

Gorresio—

अस्त्रादुन्मोच्य चात्मान ज्ञात्वा पैतामहान्वरान् ।
ममर्ष राक्षसा वीरो यन्त्रणा वा यदृच्छया ॥

—ज्ञात्वा पैतामहा-द्वरात् Compare मानयन्तश्च त वाक्यम्, P. 13. L. 9.

P. 8. L. 17.—कृत्वा राम प्रदक्षिणम्. Compare with the Pradakshinâ the Highland custom which Scott notices.—"In the meantime she traced round him, with wavering step, the propitiation, which some have thought has been derived from the Druidical mythology. It consists, as is well known, in the person who makes the deasil ( daksha ) walking three times round the person who is the object of the ceremony, taking care to move according to the course of the sun." *The Two Drovers.* (Quoted by Griffith )

P. 9. L 6.—प्रमुमोह. मुह् is conjugated in the Âtmanepada in classical Sanskrit.

P. 9. L. 18.—पश्यन्ति. '*Are compelled to look on.*' Compare a similar touch in Virgil where he speaks of youths placed on their funeral pyres '*ante ora parentum–before the faces of their parents.*'

P. 9. L. 27.—सर्वपापैः प्रमुच्यते. See note on P. 8. L. 18. But this is generally explained as equal to '*is deserted by his sins*' rather than '*is freed from his sins.*'

P. 10. L. 13.—आपृच्छ्याभ्यनुज्ञातः. '*Asking and obtaining leave to go.*'

P. 10. L. 15.—तमसातीरम्. 'There are several rivers in India of this name, now corrupted into Tonse. The river here spoken of is that which falls into the Ganges a little below Allahabad.' Griffith from Schlegel.

P. 10. L. 18.—भरद्वाज. 'In Book II, Canto LIV, we meet with a Saint of this name presiding over a convent of disciples in his hermitage at the confluence of the Ganges and the Jumna. Thence the later of these introductory cantos has borrowed the name and person, inconsistently indeed, but with the intention of enhancing the dignity of the poet by ascribing to him so celebrated a disciple.' Griffith from Schlegel.

P., 11. L. 9.—वियुक्ता पतिना. Compare the construction with वल्गुस्वम् P. 8. L. 16. and the note there.

P. 12. L. 10.—वाल्मीकये च ऋषये. Before an initial short ṛ a final long or short *a i u ṛi* may remain unchanged, except that the short vowel must be substituted for the long.

P. 12. L. 16.—य.. हन्यात्. '*Who could kill.*' Bomb. Ed. हन्याद् हतवानित्यर्थे छान्दसम्.

P. 13. L. 11.—बुद्धि. '*Intention, purpose*' Compare the English phrase '*I have a mind to do this.*'

P. 13. L. 28.—लोकादन्वीक्ष्य. This is the reading also in Gorresio. But Schlegel is probably wrong in translating '*contemplando amplius uti esti-*

*gans-searching it out more and more by contemplation* ' Rather *enquiring of every one concerning it.*—Bomb. Ed. has a different reading व्यक्तमन्वेषते भूय .

P. 14. L. 23.—See note on P. 6. L. 2.

P. 15. L. 11.—दिश प्रस्थापनम् ' *The despatch* (of the monkeys) *into all the quarters* ' Motion towards is the inherent signification of the accusative case-ending, and it is only because a verb is generally required for the full expression of that notion that the accusative is more commonly found in connection with verbs than with nouns.

P. 15. L. 13.—प्रायोपवेशनम्. प्रायेणानशनेन वानराणामुपवेशन समुद्रतीरे वास .

P. 16. L. 16.—कुशीलवौ. Represented as twin sons of Rama and Sitâ, born after Rama had repudiated Sitâ, and brought up in the hermitage of Valmiki. कुशीलव in the sense of a bard is perhaps an older word than this etymology.

P. 17. L. 18.—रक्ततरम्. मधुरतरम् Compare P. 18. L. 13.

P. 18 L 3—See note on P. 9. L. 2.

P. 18 L. 13.—स्वरविन्यासजातिस्वनम्.

> " With tone and accent deftly blent
> To suit the changing argument."
>
> *Griffith.*

The Bomb. Ed has स्वरम् which the commentary explains by नाद.

P. 18. L. 15—हृष्यत् Participle agreeing with सत् in the next line. Bomb. Ed. has हृष्यत् which does not give any sense.

P. 19 L. 2—पद्वि. गुणवद्वपि Schlegel and the Bomb. Ed. have परिवृत्तवद्वपि. See note on P. 40. L. 3.

P 19 L. 6.—अवसरज्ञा. समयदर्शिन.

way in which Job's wealth is stated, 'His substance also was seven thousand sheep, and three thousand camels, and five hundred yoke of oxen, and five hundred she asses and a very great household, so that this man was the greatest of all the men of the east" And, 'So the Lord blessed the latter end of Job more than his beginning, for he had fourteen thousand sheep, and six thousand camels, and a thousand yoke of oxen, and a thousand she asses' पशु is the same word as the Latin word *pecu*, cattle, which the Italians took when they wished to make a word for money ( *pecunia* ) It is also the same as the German word for cattle ( *vieh* ) and our English word *fee*.

P. 19. L. 18.—सुविभक्तान्तरद्वारा सुविभक्तमहापथा,

> " Her gates at even distance stand.
> Her ample roads are wisely planned."
>
> *Griffith*

P 19. L 14.—राजमार्गेण. Compare the English expression '*the king's highway*.'

P. 19. L 17 —सुविभक्तान्तरापणा. This is the reading of the Bomb Ed which has the note सुविभक्तमन्तरं येषां तादृशा आपणा यस्यां सा Schlegel has सुविभक्तान्तरायणाम्

P. 19. L. 19 —राष्ट्रवर्धन . An epithet corresponding exactly to a favourite title of the Emperors of Germany—"*Mehrer des Reichs* '

P 20 L 9 —सर्वशस्त्रार्थपारगे . Schlegel has सर्वयन्त्रार्थपारगे which does not seem right, though if it could mean '*skilled in the use of all weapons*' ( *omnis artis bellicae peritis' Schl* ) it would suit the context better than the reading in the text, which is that of Carey and Marshman The Bomb. Ed has not got the line. सर्वयन्त्रास्त्रपारग would be a slight alteration of Schlegel s text giving a good sense.

P 21 L 19 —क्षत्रमनुव्रता . The accusative expresses the same idea [illegible] the अनु in अनुव्रता Compare the similar constructions in the next line and the note on P. 15 L 11.

P 22 L 2 —नदी The river Indus —बाह्लीक or Bahlika [illegible] Bactriana; its name is preserved in the modern Balkh. Schlegel.

P. 22 L 7 —'There are four kinds of elephants —1 *Bhaddar*. It is well proportioned, has an erect head, a broad chest, large ears, a long tail, and is bold, and can bear fatigue 2 *Mand* It is black, has yellow eyes, a uniformly sized body, and is wild and ungovernable. 3. *Mirg*. It has a whitish skin, with black spots. 4. *Mir*. It has a small head and

obeys readily. It gets frightened when it thunders.' Quoted by Griffith from Blochmann's translation of the *Ain i-Akbári*, *Ain.* 41.

P. 22. L. 11.—सत्यनाम्नीम् '*Fitly called Ayodhyâ* (*Invincible.*)'

P. 23. L. 5.—नरेन्द्रवचनासक्तचेतसस्तत्परायणाः. '*Devoted with their whole soul to the king's commands and regarding him only*' This is the reading of Carey and Marshman. Schlegel's नरेन्द्रवचनासक्ताचेतस्तस्य परायणाः involves an impossible construction of परायण (*Atque in ejus mentem sese insinuantes*). The Bomb. Ed. has not got the line.

P. 23. L. 8.—पारेण goes with आवेदितम्; and the अपि connects चिकीर्षितम् with क्रियमाणम् and कृतम्.

P. 23. L. 12.—अतीक्ष्णदण्डाः. Bomb. Ed. सुतीक्ष्णदण्डाः.

P. 23. L. 8.—The course of the narrative is broken here to introduce the story of Rishyas'ringa, and when it ■ resumed at P. 32 L. 5 there is no trace of the command that Sumantra should bring Vasishtha and the others. We seem to have here a piece of unskilful joining.

P. 24. L. 10.—पुराणे. '*Long ago.*'

P. 25. L. 11.—विभ्रान्तनना°. Bomb. Ed. चपलनयना.

P. 26. L. 27.—यत्नं कुर्वन्ति दर्शने. '*They try to see him.*'

P. 27. L. 1.—चारयित्वा तु तमृषिमाश्रमादभिनिर्गतम् '*And when they had ascertained that the sage was out from the hermitage.*'

P. 27. L. 2.—ऋषिपुत्रान्तिके is the complement of तस्थुः The poet might have written पुत्रस्य, but he prefers to make a break, and express the same thought through a different construction. '*They stood in his sight —before the rishi's son, I mean.*'

P. 27. L. 13.—See note on P. 6 L. 2.

P. 27. L. 15.—अश्रुतपूर्वं तत् must be taken as a cognate accusative after दृष्ट्वा. If तत् referred to the things seen and not to the action of seeing we should have had अदृष्टपूर्वम्

P. 27. L. 22.—जिगुः. The common form is जिगासुः.

P. 28. L. 1.—कामरूपधराः. This word is generally equal to कामरूपिन् '*having a form that ■ n be changed at will.*' Compare P. 71. L. 27. This however cannot be the meaning intended here. Read with the Bomb Ed काम्यरूपाः '*having attractive forms.*' *Cf* शुभदर्शनाः in L. 5. below.

P. 28. L. 6.—सर्वदाम् Notice the gender.—विविधैर्वस्त्रैः See note on P. 5. L. –).

P. 28. L. 8.—सहिताः. *'All together.'* *Cf.* P. 65. L. 16.

P. 28. L. 24.—परिपस्पृधिरे. स्पृध् is not conjugated in the Atmanepada in classical Sanskrit. ववसिजेः. Grammar § 540.

P. 28. L. 27.—*'Asking the Brâhman's leave to go; and alleging that they had a religious duty to perform'*

P. 28 L 28.—गमनाय मतिं चक्रुः. *'Set their mind to go.'* Notice the physical metaphor, and compare the English expression *'bent on going.'*

P. 29. L. 1.—व्यपदिश्य. *'Falsely alleging.'*

P. 29. L. 2.—*'The women left on that pretence* (व्रतचर्यां निवेद्य), *being (really) afraid of his father.'*

P. 29. L. 8.—चिन्तासागरमध्यगम्. Compare our expression *'plunged in thought.'* So also Shakspeare speaks of a *'sea of troubles.'*

P. 29. L. 11.—उक्त is used generally of the words spoken, but often also, as here, of the person addressed.

P. 29. L. 13.—मत्युद्गतोपमेः. Compare Miranda's exclamation in the converse case —

> 'I might call him
> A thing divine, for nothing *natural*,
> I ever saw so noble.'

*The Tempest, Act. II. Sc. I.*

P. 29. L. 17.—See note on P. 6. L. 2.

P. 29. L. 18.—Schlegel thinks a line has dropped out after this one which he translates conjecturally *'Are wont towards dusk to attack hermits.'*

P. 30. L. 2.—गमनाय मतिं चक्रे. See note on P. 28. L 28, and compare our expression *'He made up his mind to go.'*

P. 30. L. 21.—मैत्यानन्तरम्. Grammar § 545.

P. 31. L. 8.—देवप्रभवः. *'Descended from a god'* A bahuvrihi compound.

P. 31. L. 3.—स त्वम्. सन् is not originally the pronoun of the third person but a demonstrative which may be found with all three persons. Compare तस्य मम P. 109. L. 11, and सोऽहम् P. 172. L. 23.

P. 32. L 18.—सप्ताष्टदिवसं यावत् *'During the space of seven or eight days.'* यावत् is here a preposition placed after the accusative depending upon it.

P. 33. L 1.—इमं याजयितुम्. *'Sacrifice for him.'*

P. 33. L. 8.—प्रियाख्यानपुरःसरात् '*With the glad tidings.*' A bahuvrihi compound. See note on P. 5. L. 20.

P. 34. L. 15.—हयपूर्वेण कर्मणा.' '*With the horse-sacrifice.*' See same

P. 38. L. 4.—मत्तनेपथ्य. Bomb. Ed. बन्धनमुख्य which is probably right. *Cf.* below L. 2.

P. 38. L. 6.—This refers to the same time as the opening verse of the last canto and not to a year later.

P. 38. L. 12.—परिक्रमन्ति. प्रावोक्तस्तक्रियाकाल्मविसृज्य प्रवर्त्यन्ते. It refers to the solemn procession round the *mahâvîram* which was one of the initial ceremonies of the Pravargya rite.

P. 38. L. 13.—'The Pravargya ceremony lasts for three days, and is always performed twice a day, in the forenoon and afternoon. It precedes the animal and Soma sacrifice. For without having undergone it, no one is allowed to take part in the solemn Soma feast prepared for the gods.' Haug's Aitareya Brâhmaṇa. Vol. II. P. 41. Note.

P. 38. L. 15.—मभिहुत्य. This, which is the reading of Schlegel's text, is preferable to the variant ( भभिहुत्य ) which he adopted for his translation. Bomb. Ed. अभिहुत्य' Com. तत्तत्कर्मसु हुत्वा देवतादिभि प्रेषः.

P. 38. L. 17.—ऐन्द्रः—इन्द्रदेवताको हविर्भागः—राजा सामलता.—मभिहुतो is from the Bomb. Ed. for Schlegel's भभिहुतो. L. 17, L. 18 and L. 19 refer to the three *Savanas* respectively.

P. 38. L. 22.—शिक्षाक्षर. शिक्षा is not अभ्यासकाल here as the Bomb. Com. explains it, but the common title of the works in which the proper pronunciation of the ritual was taught.

P. 39. L. 2.—नातृप्तिरस्लभ्यते. The Bomb. Ed. has an odd variant न तृप्तिरस्लभ्यते. With the one reading the reference is to the abundance of the food, with the other to its excellence. Compare तृप्तिरासर्व-भूतानां कदाचनं नास्ति मे त्रिभि. P. 151. L. 7.

P. 39. L. 19.—हेतुवादान्. '*Discussions on the causes of things.*' Schlegel calls attention to the liberality of thought implied in making open questions of such subjects, and contrasts it with the different spirit shown in Manu ( Bk. II, 11. ), and in some other religions.

P. 39. L. 25.—On the various trees of which it is desirable for certain specified objects to make *Yupas* see the first chapter of the Second Book of the Aitareya Brâhmaṇa.

P. 40. L. 2.—काञ्चनाकृतयोमवन्. *i. e.* they were gilt. Bomb. Ed. काञ्चनान्कृतयोमवन्.

P. 40. L. 3.—एकविंशतिनिर्मुक्ताः. Corrected from the एकविंशतिनिर्मुक्ताः of Schlegel. Grammar § 547. But Carey and M. and the Bomb. Ed.

